# पूर्वोक्तिः

(पं. नारायणाचार्यः, तर्ककेसरी)

अनुकूले दयासिन्धौ हयग्रीवाभिधे विभौ ।
अरिर्मित्रं विषं पथ्यं भवेन्नास्त्यत्र संशयः ॥

श्रीमध्वगुरुसन्मान्यदिव्यसुन्दरविग्रह ।
कृष्ण मन्दस्मितेन्द्वास्य कृपादृष्ट्या पुनीहि माम् ॥

अपूर्वामपि पूर्वोक्तिं गुर्वाज्ञागौरवादिमाम् ।
कुर्वन्नज्ञोऽपि यास्यामि हास्यस्य पदवीं न तत् ॥

अस्मद्गुरुवरेण्यैर्मान्यैः श्रीविश्वेशतीर्थश्रीमच्चरणैराज्ञप्तः पूर्वोक्तिमिमामारचयन् प्रकृतस्य त्रिविक्रम इति सुगृहीतनामधेयस्याऽचार्यवर्यस्य समग्रं चरितादिकमनधिगच्छन्नपि कौतुकात्तस्मिन्नेव विषये किमपि वक्तुमुत्सहतेऽयं जनः । सत्यां देव्यां सुब्रह्मण्य इति वर्णानलंकुर्वतो विप्रोत्तमात्पण्डितप्रकाण्डाज्जनिमान्महानुभावोऽयमादित एव प्रतिभादिगुणगणगणनीयो बाल्य एव किमपि किमपि प्रष्टॄन् स्वीययाऽनितरसाधारण्योत्तरणसरण्या विस्मापयन् चकितहृदयान् दिङ्मूढान् नासिकाग्रनिक्षिप्ताङ्गुलीकान् स्तब्धानिव ग्रहग्रस्तानिव निरस्ताखिलेन्द्रियव्यापारानिव कुर्वन्नासीदिति प्राज्ञा न आवेदयन्ति ।

एवं सानुरागं सश्रद्धं सकौतुकं चावगततत्त्वैर्निगदितेषु तदीयचरितेषु प्रत्ययार्थं किञ्चिद्भवतः श्रावयामि ।

अयि महाशयधौरेयाः,

विषयमिमं पात्रीकुरुत नेत्रयोरथवा श्रोत्रयोः, यदसौ महानुभावः कस्मिंश्चिद्दिवसे बालजनसाहजिकया चिक्रीडिषया गाश्चारयद्भिर्गोपालबालैः सहानतिदूरे ग्रामाद्बहिः क्रीडन्व्यतीतमपि दिनं नास्मार्षीत्, यन्तमप्यस्तं सवितारं नाद्राक्षीत्, तदा तेनैव पथा गच्छन् कश्चित्पान्थोऽस्य तेजसा समाकृष्ट

इव परिचितचर इव समीपमागत्यैतमेव महानुभावं सादरं पप्रच्छ—'वत्स कियद्दूरे ग्राम' इति। स बालोऽपि क्रीडासक्तोऽपि किमप्यविचार्य तत्क्षण एव तं पान्थमुदतारीत् , 'किं न जानीषे, मां पश्य गगनतले लम्बमानं सवितुर्बिम्बं च पश्य, इमा गाश्च पश्ये'ति । स तु पथिकः सहसाऽनधिगताशयः विस्तृतेन चक्षुषा बालं पिबन्निव अङ्गैराश्लिषन्निव ग्रहपरिभूत इव मन्त्रमुग्ध इव तूष्णीमेवावतस्थे । तस्य पथिकस्येमां दशां दृष्ट्वा कृपापरवश इव स्वयमेवायं महानुभावो हसन्नवोचत् 'किं मदुक्तमपि नाज्ञासीद्भवान् । अहो, अहमिमे च बालाः, सायन्तनश्च समयः, इमाश्च गावः । अस्मिन् समये वयं ग्रामाद्बहिर्दूरं गन्तुं प्रभवेम किम्? अतो ग्रामो दृष्टिगम्य एवे'ति। पान्थस्तु प्रौढमतीनामपि दुरधिगमयाऽनया-वाग्झर्या जर्जरितसर्वविचारः पिबन्निव बालं किमपि वक्तुं न प्राभवदिति ।

एवमन्यदपि किञ्चिन्निवेदयामः । कदाचित् बाल्य एव गृहे वसतोऽस्य महानुभावस्य पुरो भिक्षार्थी कश्चित्क्षपणको भिक्षां देहीति वदन्नागतः । तदात्व एवायं तं भिक्षुमेवमुवाच—

'एकः क्षपणक शाकाहर्ता
बहवः क्षपणक शाकादानाः ।
यत्र क्षपणक बहुशाकादाः
तत्र क्षपणक शाकाशा का ॥' इति ।

इदमेव वृत्तं मनसि निधाय श्रीसुमध्वविजये त्रयोदशसर्गे--"कलभाषण एव सूरिपोतः कविरासीदनवद्यपद्यवादी"त्युक्तम् । बालस्यापि सतोऽस्य महिमा स्थालीपुलाकन्यायेनाधिगतः स्यात् । अनेन च इदमेकं सुनिष्पन्नमिति यदस्मन्मतेऽविरुद्धस्यैतिह्यस्य आगमत्वेन प्रामाण्यं सम्मतं, 'भवति च यदि तथ्यं नागमाद्भिद्यते तदि'ति वचनात् । अस्ति चातिप्रथितमैतिह्यं—अयं त्रिविक्रमार्य ईश्वरांशसम्भूत इति । नच विरोधिप्रमाणमद्ययावदधिगतमस्माभिः। एवमेवैतिह्यस्याप्रामाण्ये टीकाचार्यप्रभृतीनामपीन्द्रांशत्वादिक न सिद्ध्येदिति बहुविप्लवः स्यात् । किञ्च

कल्याणीति प्रथिताऽमीषामेव सहोदरी अवतीर्णा भारत्येवेति विद्वद्भिरादृता यावज्जी-वमविवाहितैव स्वानुजशङ्करार्यैः सहाऽचार्यसमीपमागता तत्रैव तत्सेवयैव निर्वृताऽ-वसदिति । श्रीमदाचार्याणां इह जन्मनि विवाहो नासीदिति निश्चप्रचम् । सा च देवी पुरुषान्तरसम्बन्धायोग्या, अतोऽनूढैवाऽसीत् । अत्रैकं रहस्यं च देवगुह्य-मिव प्रतिभाति । यदस्मद्देशे अनूढायाः प्राप्तवयस्कायाः स्त्रिया धर्मशास्त्रे त्याज्यता प्रतिपादिता । केरलदेशे परमनूढा अपि मान्याश्चरित्रेण पूज्याश्च साहस्रीतोऽप्य-धिकसङ्ख्याः स्त्रियो दृश्यन्ते । अत एवेमां देशपद्धतिमनुरुन्धत्या श्रीकल्याणीदेव्या केरलदेशस्थश्रीत्रिविक्रमार्यमन्दिरे (कावुमठ) तदनुजात्वेनावातारि । शूद्रभूयिष्ठे केरले कथमन्यथाऽवतरेत्सा देवी ? त्रिविक्रमार्योऽपि महानुभावः कथं तत्रावतरेत्? एवं तौ सहोदरभावं गतौ हृष्यन्तौ स्वस्वरूपं गूहमानौ चोषतुरिति श्लिष्टतरमि-दम् । इदमेव च देवगुह्यमिवेत्युक्तं पुरस्तात् ।

यथा वा पाजकक्षेत्रे मातृवात्सल्येन श्रीमदाचार्याणां चिरवास इति श्रीसु-मध्वविजये तृतीयसर्गे सप्तदशतमे पद्ये—

"वरविमानगिरावपि चण्डिका शिशुमहो जननी तमलालयत् ।

अपरथा परितुष्टमनाः कथं चिरमिहैष वसेद्विसहायकः ॥" इत्यचकथत् , तथैवेहापि स्वसुतनिर्विशेषं त्रिविक्रमपण्डिताचार्याणामुपरि वात्सल्यादेव तत्रावतरन्ती देशपद्धतिं शास्त्रनियमं च मानयन्ती स्वस्वरूपं गूहयन्ती कावुमठे चिरमुवास । त्रिविक्रमाचार्योऽपि इममेवाऽशयं तत्र स्वजन्मना सूचयतीति । अपि-च्चायमाचार्यः स्वकृते तत्त्वदीपिकाख्येऽस्मिन्नेव ग्रन्थे (१७ पत्रे १२ पङ्क्तौ)—

"अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।

विश्रुता नृषु जातं च तं विद्याद्देवसत्तमम् " इति नारायण-श्रुतिं श्रीमदाचार्याणां विषय उदाहरन् स्वमपि कटाक्षीकरोतीति चेदुच्येत, तदपि नातिशयोक्तिकोटिमाटीकेत । यतो ह्यस्यापि त्रिविक्रमार्यवर्यस्यातिप्रथितप्र-तिभावत्त्वेन देवोत्तमत्वं गमयेदेव, न चेन्नारायणश्रुतिः कुप्येत् । कथमन्यथा

साधारणः पुरुषः सर्वज्ञाचार्यपुरतः पञ्चदशदिनानि विवदेत । अपिच श्रीसुमध्वविजये त्रयोदशसर्गे ५१तमे पद्ये—"अतिदक्षमतिं सपादलक्षे समये मायिजनस्य युक्तिशूरमि"त्युक्तरीत्या यस्यातिलौकिक्या प्रतिभया स्वयशोविशोभितदशदिशानामनवद्यविद्याप्रद्योतमानानां महीयसां पण्डितप्रकाण्डानां समाजोऽपि, मध्वविजये १३तमे सर्गे ५० तमे श्लोके—"अपि भानुपुरःसराः समस्ताः प्रययुः कीटमणिप्रभत्वमाशु" इत्युक्तरीत्या खद्योतनिभत्वमाप, तस्य चैतस्य प्रतिभा कीदृशीति समग्रं वर्णयितुं न वयं प्रभवामः । किन्तु नारायणश्रुत्युक्तरीत्या लौकिकप्रवादाच्चास्य महानुभावस्य देवोत्तमत्त्वमनुमिनुमः । अपिचास्य कवेः त्रिविक्रम इत्याख्याऽन्वर्थेति २३ तमे सर्गे ४६ तमे श्लोके मध्वविजये—"कविराख्यादुचितां त्रिविक्रमाख्याम्" इति श्रीनारायणपण्डिताचार्यैः उदघोषि । अत्र 'त्रिषु वेदे कवितायां वेदाङ्गे चे'ति विश्वपतिव्याख्यायाम् । वयन्तु—लोकातिशयप्रतिभावतः महादेवांशसम्भूतत्वेन श्रुत्यादिसम्भावितस्य निरुपचरितान्वर्थत्वसम्भवे सामान्यपदस्य संकुचितार्थतां न रोचयामहे । तदीयग्रन्थावलोकनसमनन्तरमेव सकलशास्त्रपाण्डित्यमस्याबाधितं दरीदृश्यते । न केवलमेतावदेव किन्त्वबाधितं च तद्दृश्यमानं, अतः पदवाक्यप्रमाणेषु त्रिषु विक्रमो यस्येति वा, (पदं व्याकरणं, वाक्यं मीमांसा, प्रमाणं वेदान्तः), "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् " इत्युक्तरीत्या इतिहासपुराणयोरपि वेदोपबृंहकत्वेन वेदाङ्गतुल्यतया शिक्षा व्याकरणं कल्पो निरुक्तं ज्यौतिषं छन्द इति षडङ्गेषु व्याकरणस्यापि परिगणितत्वेन तस्यापि वेदाङ्गतया साङ्गो वेदः मीमांसा न्यायशास्त्रं इति त्रिषु विक्रमो यस्येति वा, साङ्गो वेदः, सालङ्कारं साहित्यं, सकलानीतरशास्त्राणि चेति त्रिषु विक्रमो यस्येति वा, (तत्रापि न प्रवेशमात्रं किन्तु विक्रमः पराधर्षणीयं पाण्डित्यं) इति बहुधा सम्भवदर्थकपदमहिम्ना अनेकेषामर्थानां लाभात् । यदितोऽन्येप्यर्थाः स्फुरेयुः तेऽप्यवश्यं ग्राह्या एव, पदस्य वाक्यार्थस्य च तादृग्योग्यताया भावादिति सशपथं ब्रूमः । अत एव श्रीसुमध्वविजये विशिष्यैकमप्यर्थमनुक्त्वा "उचितां त्रिविक्रमाख्याम्" इति सामान्यत एवाकथयत् ग्रन्थकारः । "नभः पत-

न्त्यात्मसमं पतत्रिण" इति न्यायमनुरुध्य वयं विचारयामः । आस्ताम् । अस्य महानुभावस्य स्वगुरुषु श्रीमदानन्दतीर्थभगवत्पादेषु कियान् भक्त्यतिशय इति तु वाचामगोचर इत्येवाऽऽकलयामः। तथाहि यो हि तत्त्वदीपिकायामादितः "श्रीवेदव्यास-नतिपुरःसरं त्रिंशत्यधिकसङ्ख्यैः पद्यैराचार्यान् स्तुवन्नपि न परितुतोष। न केवल-मेतावत् । किन्तु स्तुतेरयं स्वभावः, यदुक्तस्यैव क्रियासमभिहारेण पृथक्पृथक्पदै-रनुवर्णनम् । अत एव श्रीमद्भिष्टीकाकृद्भिरपि "आर्थिकपुनरुक्तेः स्तुतित्वमेव समाधानमि"ति समाधायि । सत्यामप्येवं वस्तुस्थितौ महानुभावस्यास्य पुनर्गुरु-वर्णनावसर ईदृक्सङ्ख्याकैः पद्यैरुक्तेष्वपि नैकमपि पदमुक्तार्थमिति महदिदं कवितारसिकानां प्रमोदस्थानम् । निरतिशयस्वप्रतिभामहिम्ना वा कवितायां स्वस्य विद्यमानविक्रममहिम्ना वा स्वगुरुषु विद्यमानभक्तिपारवश्येन नवनवगुणा-नुस्मरणाद्वा एवमस्तौदिति वयमालोचयामः । यस्मिन्वर्णने २पत्रे दशमपद्ये—

> येनैकान्तयतात्मनामृजुवरेणाऽचार आचार्यवान्
> सन्न्यासेन निजा स्वयं प्रकटिता निःसङ्गता संसृतौ ।
> श्लाघ्यः पारमहंस्य आश्रमवरो यच्छीलगङ्गाजलस्नातो
> व्यक्तमयोग्यसङ्गमभुवो दोषात्पुनर्मोक्षितः ॥

इति चमत्कारकार्येकं पद्यमस्ति । यल्लोके सदाचारेण पुरुषः तीर्थजला-दिना तत्सङ्गी पुमान् महीयत इति प्रथितम् । अत्र पुनर्भक्तिभरेण सर्वं विपर्या-सेनैव निरवर्णयत् । अथापि तद्योग्यं साहजिकमिति च रत्नं हेम्ना समागतमि-ति वर्णनाचातुरी चमत्करोति नश्चेतः । एवं तत्रैव वर्णनाप्रसङ्गे त्रयोदशपद्ये—

> स्पृष्टं करेण विषमप्यमृताय दृष्टं
> यस्योदयः स भगवान् यदु राति किञ्चित् ॥
> तद्भेषजं गदवतां प्रतिकृत्तमायु-
> र्वेदेषु सिद्धममुनेत्यविचार्यमेतत् ।

"अत्र स्पृष्टं करेण विषमप्यमृताय दृष्टं""यदु राति किञ्चित्तद्भेषजं गदवता-

मि''ति । तथा ४४०तमे पृष्ठे ''यस्य खलु हन्त परमदयानिधेः परमपुरुषगुण-गणमणिनिकरनिधानभूतयोर्भाष्यानुभाष्यामृतसमुद्रयोः कलिमलकर्दममावर्जयितुं सज्जनमामज्जयतः समीचीनवचनसुस्वादुसुधारसास्वादप्रमोदनिर्भरहृदयाः विशद-मतयः करतलविलसितामलकवदलमखिलपुरुषार्थसार्थक सद्यः साधु समर्थयन्ति'' इति । तथा ४९९तमे पृष्ठे ''यस्यास्खलितानवरतवेदशास्त्रव्याख्यानश्रवणकौतुक-समुत्खातदुःखसङ्घातो निखिलपण्डितवर्गो परमामृतसमुद्रावगाहीव बहुलमाह्लादमा-प्नोति''इत्याद्यैः श्रीमदाचार्यवर्येषु कीदृशी भक्तिः प्रदर्शितेति समग्र विवरीतुं न वयं प्रभवामः । वाचका एवात्र प्रमाणम् । अमीषामुक्ति पौनरुक्त्यं नास्तीति पूर्वं प्रत्यज्ञायि ।

''त्रेधाऽवतारमवनाय सतां बभित्थे—

त्याद्या श्रुतिर्भगवती गुरुमेनमाहे''त्याद्ये पद्ये उक्तस्य त्रेधाऽवतारस्य पुनरुक्तावपि स्वोक्तदार्ढ्याय प्रमाणमत्र व्यनक्ति स्मेति न दूषणावकाश. । आस्तां तावत्, प्रायो लोके ये काव्यालङ्काराद्यतिशयपरिचयवन्तः, न तेषां शास्त्रे महान् परिश्रमः ये तु शास्त्रे सम्यक्कृतपरिश्रमाः, न तेषां काव्येष्वतिपाटवम् । साधारणोऽयं नियमः । अतिविरलतया क्वचिदेव स्वीयप्रतिभाविभासितकाव्य-शास्त्रोभयविशिष्टपरिज्ञाना अप्युपलभ्येरन्, अथापि यादृशी सरसरसिकमनोवि-नोदिनी श्रवणमधुरा, किमधिकोक्त्या, सकलेन्द्रियाह्लादिनी पदपदार्थमञ्जुल-भणितिः न तादृशी शास्त्रपंक्तिः, सा हि कर्णकठोरदुरधिगमार्थपदगुम्फिता कथं कथमपि द्रष्टृमनो नावर्जयतीति सर्वजनानुभवसिद्धं निश्प्रचं च । सत्यप्येवं तस्या-स्य महानुभावस्य वश्यवचसः महाप्रतिभाविभूषितस्य शास्त्रीयार्थानामपि प्रतिपाद-नसमये मुखादुद्गता पदपद्धतिः प्रथितयशसः कादम्बरीकारस्य बाणस्यापि परिणता-मपि भणितिमतिशेत इत्युक्तमपि नातिशयोक्तिकोटिमाटीकेत । एवमप्रतिमपाण्डित्य-वतोऽपि काव्यरचनाचमत्कृत्यधिकचमत्कारकारिशास्त्रार्थरचनाचातुरी अस्माकं मनसि अमानुषत्वं स्मारयन्त्यस्य देवोत्तमत्वमेव द्रढयति । तथाहि एतद्ग्रन्थस्था

एवास्य महानुभावस्य काश्चिच्छास्त्रपङ्क्तयोऽनुभावयितुं प्रदर्श्यन्ते—पश्यन्तु महान्तः। (४७तमे पत्रे)"यच्चोक्तं ब्रह्मव्यतिरिक्तस्य जीवस्यैवाभावाद्ब्रह्मैवाज्ञं भवेदिति तदपि भेदविद्वेषदोषविषदूषितत्वात्प्रमुषितशेमुषीगुणोन्मेषैरभिलषितमिति मनीषिणो मन्यन्ते।"

(५२तमे पत्रे) "यदपीदमुदितं षष्ठ्यादीनां मुख्यवृत्तिहेतूनामभावादशब्दं ब्रह्मेति च। तदपि निखिलवेदवाक्यसमन्वयपरिनिर्णीयमानपरमपुरुषगतगुरुतरगुणगणागण्यताकर्णन कर्णशूलमिव दुःसहमसहमानानां स्वमतमानदुर्बलानां बालिशानामिवाऽऽक्रोशमात्रमुत्पश्यामः।"

(५९तमे पत्रे)"ऐक्यवादिनोऽपि स्वयम्प्रकाशस्यात्मनो निर्विशेषस्य ब्रह्मैक्यं न शास्त्रादृते जानन्ति, अस्माकं तु सविशेषत्ववादिनामेव सुगमः पन्थाः, कश्चिद्विशेषमीश्वरस्तमस्य प्रतिबध्नाति भक्त्या प्रसन्नः संस्तमो निवर्तयति इति"
——इत्यादयः इत्यलम्।

अद्राक्षीत्त्रीणि रूपणि कदाचिद्बहुभाग्यवान्।
श्रीमदाचार्यवर्याणां तथा रामस्य कृष्णयोः॥
तत्रापि गुरुभिः सेव्यमानानि परमादरात्।
परमानन्दमग्नोऽसौ चक्रे वायुस्तुतिं सुधीः॥

अस्य महानुभावस्य विषये मान्यप्राज्ञपरम्परागताऽस्माभिः श्रुताऽथ प्रथिता काचिद्गाथा भवतां पुरस्तात्प्रस्तूयते। तथाहि—श्रीकृष्णमठे श्रीमदाचार्यैः श्रीकृष्णपूजायां प्रचलितायां नैवेद्यसमये परिचारकाः सर्वेऽपि द्वारं पिधाय बहिरायान्ति। अन्तराचार्या एव नेतरेषां प्रवेशः यावन्नैवेद्यार्पणं, तदाऽऽचार्यशिष्याः बहिरेव देवपुरतः द्वादशस्तोत्रं पठन्तः तिष्ठन्ति। सोऽयं सम्प्रदायः तदारभ्य प्रचलितः इदानीमपि प्रत्यस्मदीयमठं दरीदृश्यते। द्वादशस्तोत्रपठनं देवदेवस्याऽऽचार्यनैवेद्यसमर्पणं च समसमयसमाप्तिकं च प्रायो नियतमस्ति। नैवेद्यनिवेदनसमाप्तिसूचकस्तु अन्तराचार्यैः क्रियमाणो घण्टानाद एव। सति चैवमेकस्मिन्नहनि द्वादशस्तोत्रं पठन्नयं महानुभावः

त्रिविक्रमार्यः द्वादशस्तोत्रे समाप्तेऽपि अतियातेऽपि बहुसमये घण्टानादमश्रृण्वन् कुतो वा विलम्बः किमत्र निदानं इति विचार्य निमित्तमनवगच्छन् जिज्ञासया कौतुकात् देवदेवपुरःस्थितगवाक्षं किञ्चित्प्रसार्य द्रष्टुमारेभे । तदात्वे किं वक्तव्यमतिविस्मयकरं किमपि दृश्यमद्राक्षीत् । तद्दर्शनमात्रातिविस्मितः पुलकितसर्वाङ्गः स्तोतुमुपचक्रमे—तदानीमुद्भूता स्तुतिरेवेदानीमस्माभिर्नित्यं पठ्यमाना वायुस्तुतिः । तत्राऽचार्याणां रूपत्रयं न केवलमेतावत् तत्सेव्यमानानि रामकृष्णवेदव्यासाख्यानि त्रीणि रूपाणि चाद्राक्षीदिति तद्दर्शनमनुसृत्यैव श्रीमदाचार्याणां रूपत्रयपरत्वेन वर्णनमत्र स्तुतौ दृश्यते । एवं समापितपूजेषु श्रीमदाचार्यवर्येषु बहिरागतेषु स्वकृताचरणजापराधशङ्कया भिया ह्रिया च श्रीमदाचार्याणां पादसरोजयोः पुरः स्वकृतां स्तुतिं समर्प्य प्रणतं त्रिविक्रमार्यमुत्थाप्येयं मत्स्तुतिरेवाभूत् देवस्तुतिरप्यावश्यकीत्यादिश्य स्वयमेव स्तुतिरूपं पद्यं निर्माय तत्र संयोज्य ख्यापयामासुरिति । तदेवं बहुतरतपसाऽप्यलभ्यमाचार्याणां विष्णोश्च रूपत्रयदर्शनं किमल्पभागधेयसाध्यम् ? तत्रापि न स्वप्ने, अथवाऽस्पष्टं, किन्तु जाग्रद्दशायामेव स्फुटतरं समग्रमिति इदमप्यस्य महानुभावस्यास्मदुक्तमीशांशत्वं गमयतीत्यलम् ।

अत्र श्रीत्रिविक्रमेति शोभनवर्णानलङ्कुर्वतो महानुभावस्य पाण्डित्यविषये नास्मदीयां लेखनीं व्यापारयामः, तथात्वे स्वस्यानभिज्ञत्वमेव प्रकटितं स्यादिति भिया । यतो हि शास्त्रार्थस्यापि ललितपदविन्यासचतुरता प्रतिपक्षिणां मूकतापादकपरमतनिरसनचातुरी वा इतरानाकलितनवनवभाष्यार्थानुवर्णनपाटवं वेत्येवमादिषु बहुषु विषयेषु सत्सु किं किमुपाददामः किं किं वा त्यजाम इति चिरं विमृशन्तोऽपि न वयं तत्त्वमत्र निर्णेतुं प्रभवामः। सर्वत्रापि मोहान्मनो धावन्न क्वचित्प्रतितिष्ठतीति इतिकर्तव्यतामूढास्तूष्णीमेवावर्तिष्महि । अथाप्यस्मदुक्तसत्यतावगमाय किञ्चिदिवोदाहरामः । अतो नास्मदुक्तिषु विरोधः शङ्कनीयः । तथाहि—५९तमे पत्रे—'नच पृथक्कल्पना युक्ता' इति भाष्यस्य मायिभास्करोभयनिरासपरत्वमाख्यायि ।

श्रीमज्जयतीर्थचरणैस्त्वेवमभिहितम्—

'यस्त्वन्नमयादीनां पञ्चानामप्यब्रह्मतां ब्रूते स तु सूत्रकारेणैव पूर्वपक्षीकृत इति न तत्पक्षं प्रत्याक्षिपद्भाष्यकारः' इति ।

एवं ८२तमे पत्रे—ज्योतिर्गायत्र्यधिकरणस्य एकाधिकरणत्वं समर्थितम्—'एकं चेदमधिकरणम् । उत्तरानुबद्धत्वात्प्रथमविचारस्य । एतन्नान्तरीयत्वात्तस्ये'ति । सत्तर्कदीपावल्यामप्येवमेवाभिहितम् ।

तथा १७८ तमे पत्रे 'नचान्यत्कल्प्यमि'ति भाष्यस्यानेकेऽर्थाः स्वरसंप्रतिपादिताः । 'उपादानत्वं ब्रह्मणो न कल्प्यमप्रमाणत्वात्—नच सूत्रार्थतया तदपि कल्प्यं प्रमाणाभावात् , नापि च समन्वयाध्यायेऽन्यत्कल्प्यम् । समन्वयसूत्राणामन्यत्राप्रमाणत्वादि'त्यादि । तथा२८९तमे पत्रे—'यत्प्रयोजनार्थं सृष्टिस्तदून्त्वान्न पूर्णते'ति भाष्यस्यार्थद्वयं रमणीयमुक्तम् । सृष्टिः सप्रयोजनेति पक्षे यस्मै प्रयोजनाय सृष्टिः पूर्वं तदभावादपूर्णता परस्य । आप्तकामत्वे न प्रयोजनवती सृष्टिरित्यापतितम् । तदा पुनर्यस्माल्लोके प्रयोजनार्थमेव सृष्ट्यादिर्दृष्टेति पुनरपि न पूर्णता भगवत्प्रवृत्तेः सम्पद्यते । को ह्यनुन्मत्तो भगवन्तमुन्मत्तमनुमनुते? इत्यादि । तत्त्वप्रकाशिकायामप्ययमेवार्थः सूचितः ।

तथा ३७२तमे पत्रे—" सैव हि सत्यादय" इति सूत्रस्य लक्ष्मीपरत्वमप्यस्तीति प्रत्यपादि—

'अव्यक्तशब्दशब्दिता स्वरमणपरतन्त्राऽक्षतगुणगणलक्षणा सा महालक्ष्मीरत्र संलक्ष्यते । स्वयं च सूत्रं तदभिमुखमिव प्रतिभाति । यथाऽव्यक्तं न तूदितमित्यादिकमुदाहरद्भिरिह भट्टारकैश्च तां कटाक्षेण वीक्ष्यमाणामभिप्रेक्षामह' इति । एतत्प्रबन्धुपज्ञमियं व्याख्या । एवं नवनवानर्थान्प्रतिपादयति, कियदुदाहरामो वयमल्पायामस्यां पूर्वोक्तौ । अतोऽलमिति उपरमामः ।

अस्य त्रिविक्रमार्यस्य सहोदरी देवी कल्याणीति पूर्वमेवोदाहरिष्म । अनुजस्तु श्रीमान् शङ्करार्य इति प्रसिद्धः श्रीमदचार्याणां सविधे पुस्तकसमूहाधिकृत

एवाऽसीदिति सुमध्वविजयाज्ज्ञायते । अत एव स्वस्मात्पूर्वमेव श्रीमदाचार्यशिष्यता-मुपगतवता स्वानुजेन शङ्करार्येण स्वगृहे सङ्गृहीतं श्रीमदाचार्याणां ग्रन्थजातं इतराविदित एव रात्रौ विचार्य शास्त्रसारमालोड्य श्रीमदाचार्येषु त्रिविक्रमार्याणां बह्वादरः समजनीति सुमध्वविजये २३—६७

"क्षणदासु विचक्षणः स वीक्ष्य प्रचुरप्रज्ञमनोज्ञशास्त्रसारम् ।

अपराविदितः प्रसादगर्भं विदधे विस्मयमान्तरं महान्तम्" इति पद्यादवगम्यते । श्रीत्रिविक्रमार्य इव शङ्करार्येऽप्याचार्याणां प्रेमातिशय असीदिति प्रसिद्धिः । श्रीमदाचार्यैः त्रिविक्रमार्याणां यथा लक्ष्मीनारायणप्रतिमाऽदायि तथा शङ्करार्यस्यापि श्रीनृसिंहप्रतिमा प्रदत्तेति । सा च नृसिंहप्रतिमा परम्परया इदानीमपि शङ्करार्यनृसिंह इति प्रथिता श्रीकाणियूरुमठे अद्यापि दृश्यमाना चकास्ति । त्रैविक्रमं लक्ष्मीनारायणप्रतीकं तु तदीयगृह (कावुमठ) एवाद्यापि विराजते । केरलीयानामावासगृहस्यैव 'मठ' इति नाम । अमीषां तनूजास्तु नारायणपण्डिताचार्या इति नाम्ना मध्वविजयादिग्रन्थकर्तृत्वेन च प्रसिद्धा एवेति न तत्र बहु कथयामः । नारायणपण्डिताचार्याणामपि तनूजः स्वपितृकृतमणिमञ्जर्याख्यस्य ग्रन्थस्य व्याख्याता प्रख्यात इति वदन्ति । अत्र विशेषविषये महान्तः प्रष्टव्याः । एवं लिकुचशेखरत्वेन मध्वविजये (१५—१३५)—

"बहवो गृहिणोऽप्यस्मिन्समग्रानुग्रहं ययुः ।

दीप्रा यत्राग्नय इव त्रयो लिकुचशेखराः ॥" इति अभिहितेषु त्रिषु प्रथमे प्रकृता एव ? द्वितीयस्तु अनुजः शङ्करार्यः, तृतीयस्तु विश्वपतिव्याख्यायां द्वावपि शङ्करार्यौ इत्युक्तत्वेन प्रायस्त्रिविक्रमार्याणां सहोदरो न स्यात् । एकोदरयोरेकनामताया अदर्शनात् । अतोऽयं शङ्करार्यः सहोदरयोः पित्रोर्ज्ञातिः कश्चिदनुजसदृशः स्यात् । अयमपि ग्रन्थकर्तेति प्रथाऽस्ति । तदीयचरितं कृतं ग्रन्थं वा न वयं जानीमः । अतोऽस्मासु महाशया न विमनायेरन्नित्याशास्महे । एवं यत्र विषये सम्यङ्न व्यलेखि नवा विस्तरं प्रत्यपादि तत्रापीदमेव निमित्तमिति न

पाठकमहाशया दुर्मनायेरन् । अमीभी रचितानां ग्रन्थरत्नानां अदसीयपुत्ररचितामां च नामसङ्ख्यापरिमाणादिकमन्यत्रेतः पूर्वमेव प्रकटयकरीति नात्र पुनः प्राकाशि इति निवेदयिता

**रजतपीठपुरम्**
**2—12—1957**

सज्जन विधेयः
**तर्ककेसरी न्यायवेदान्तवाचस्पतिः**
**इत्यादिबिरुद्भाजनतया**
**महद्भिराद्दतो भवदीयः**
**नारायणाचार्यनामा**

महतां चरिताम्भोधिं गाहमानोऽयमल्पकः ।
अन्तराशमज्ञात्वा व्यज्ञासील्लवणोदकम् ॥

---

# निवेदनीयं किञ्चित्

आचार्यपादान्तेवासिष्वग्रण्यः श्रीमतः पण्डिताचार्यस्य कृतिस्तत्त्वदीपिकानामा सिद्धान्ताब्धावुपलब्धमपूर्वमिव रत्नं नैतावताऽप्यान्तं प्राकाश्यं नीतेति खिद्यमाना वयं, समग्रं पुरुषायुषं जीवित्वा हरिचरणं परिगतानां श्रीपुत्तिकामठाधीशानां **श्रीसुधीन्द्रतीर्थश्रीचरणानां** शतमानोत्सवसमये तत्स्मारकतया तामिमां चिरत्नीं कृतिं प्रकटयितुमुदयुजाम । सम्प्रति च सन्नद्धायाः प्रवृत्तेरस्या निर्वृत्तिफलितां निर्वृतिमनुभवन्तोऽपि अस्या निर्वहणे यैर्वयं सहकृताः, ये चापूर्वस्यास्य ग्रन्थस्य प्रकटने सहभागितयाऽपूर्वविपाकमात्मनीनं कमप्यापादितवन्तस्तानिह नूनं परिस्मर्तुं ननु न विस्मरामः ।

तत्र च मुद्रणविषय आधारतयोपयुक्तानां प्राचां प्रामाणिकपाठपरिष्कृतानां च पुस्तकानां प्रापणेन येऽस्मत्सध्यूञ्चस्तेषामुपकृतिः केवलं स्मरणेनैव मुहुर्मुहुः प्रतियातनीयः ।

तानि च पुस्तकान्येवं समकेतिषत—

१ 'क' पुस्तकम्—श्री बन्नञ्जे अनन्तकृष्णाचार्यैर्दत्तम् ।
२ 'ख' " श्रीसोदावादिराजमठीयम् ।
३ 'ग' ,, श्रीकाणियूरुमठीयम् ।
४ 'घ' ,, श्री· बि. यन्. के. शर्मभिः प्रकटितं चतुरधिकरणान्तम्
५ 'ङ' ,, श्रीकृष्णापुरमठीयम् ।
६ 'च' ,, श्रीभण्डारकेरिमठीयम् ।

अपि च संशोधनविषयेऽस्माकमंसयोरंसे निधाय शुद्धपाठनिर्णीतये निर्णिक्तये च सश्रममाचार्यचतुष्टयी प्रायतिष्ट । सा चेयम्—

श्री. पि. नारायणाचार्यः, तर्ककेसरी, न्यायवेदान्तवाचस्पतिः ।
श्री. कट्टे श्रीनिवासाचार्यः, वेदान्तरत्नं, द्वैतवेदान्तकेसरी ।
श्री. बि. अनन्तकृष्णाचार्यः, न्यायवेदान्तशिरोमणिः, न्यायविद्वान् ।
श्री. के. सुब्बराय पुराणिकः, वेदान्तशिरोमणिः, विद्वान् ।

एते पुनर्महोपकारकरणेनाप्रतिकरणीयां कृतज्ञतामस्मास्वापादयन्निति ।

किञ्च श्री. नागराजशर्मभिरांग्लभाषामयी, श्री. पि. नारायणाचार्यैः संस्कृतभाषामयी च पूर्वोक्तौ निबन्ध्य दत्ते अस्मासु प्रेमातिशयेनेति साभिमानं नो हृदयम् ।

एवं मुद्रणालये निरन्तरमाग्रन्थपरिसमाप्ति ग्रन्थमिमं संशोध्य आचार्यपाद-सेवायां भागभाजां श्रीमतां बन्नञ्जे गोविन्दाचार्याणामुपकृतौ नः सुदृढं हार्दमेव प्रत्युत्तरं दत्ते ।

आदौ कियन्तञ्चित्कालं शोधनविषये सहकृतवतां श्रीमतां हरिदासोपाध्यायानामुपकारोऽपि न लघुः । एवं मूलपाठलेखनादिष्वन्यासु च व्यापृतिषु बहुविधमुपकृत्य निरन्तरमस्मासु सहृदयतां श्रीमतां मुद्राडि रामकृष्णाचार्याणां कृतज्ञतार्पणमित्युपचारमात्रम् ।

अपि चेदमवश्यमुल्लेखनीयम्—

मुद्रणायापेक्षितस्य समग्रस्याप्यर्थस्य सम्प्रदानेन महान्तं भारं निर्वोढारः श्रीमन्तः **कुत्तेत्तूरु सीतारामराव्** इत्यते स्वीयां वदान्यतामत्र-सफलामापादयन्निति मन्यामहे । आचार्यपादप्रियशिष्येण सन्दब्धस्य "आज्ञाबलादकृषि लेशत एव तेषामि"ति तदाज्ञयैव लब्धजन्मनोऽस्य ग्रन्थरत्नस्य प्रकाशनात्किमधिकमत्र सफलं कर्म सम्भावयामहे ? चिरं तेषां समितिरियं कृतज्ञा ।

अन्ते च सुन्दरं काले काले प्रकटय्य सहकृतवतां 'मेजिस्टिक्' मुद्रणालयाधिपानां च सहकारं स्मारं स्मारं तेषामहीनां कृतज्ञतामर्पयितुमियं लेखनी समुत्सहते ।

इति भवदीयः

**रजतपीठपुरम्**
**17-1-1958**

**डा। पि. जि. आचार्यः,**
**कार्यदर्शी.**
**शतमानोत्सवसमितिः,**
माध्वमहामण्डलम्, उडुपी.

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

**॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥**

श्रीमदानन्दतीर्थभगवत्पादविरचितं

# ब्रह्मसूत्रभाष्यम्



## प्रथमाध्यायः

**नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।**
**ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥**

---

## तत्त्वदीपिका

पूर्णज्ञानं विपुलपरमानन्दसंदोहदेहं
भक्तप्रीत्या कृतविवरणब्रह्मसूत्रावतारम् ।
श्रीमन्नारायणपदमहं ध्वस्तनिश्शेषदोषं
वन्दे नित्यं गुरुमपि गुरोरागमार्थप्रकाशम् ॥ १ ॥

यस्याऽऽम्नायपदाक्षराणि परमं स्वार्थं लभन्ते गुणान्
संप्रोच्यैव सुबृंहितानि बलवन्न्यायेतिहासादिभिः ।
तं सेव्यं मुनिभिः प्रशान्तमनसा भक्त्या भवच्छित्तये
स्वानन्दप्रदमिन्दिरापतिमहं भूयोऽभिवन्दे हरिम् ॥ २ ॥

अस्यन्विशेषाद्भजतो भवौघा-
दुद्यस्यन्नृगादींश्च विशिष्ट आस ।
सोऽयं हरिर्व्यासपदाभिधेय-
स्संप्रीयतां सत्यवतीसुतो मे ॥ ३ ॥

जिह्वासूल्लसिता सतां प्रतिपदं तत्त्वप्रतिद्योतिका
नृत्यन्ती परमेरितैव परमा वागीश्वरी श्रीस्स्वयम् ।

यस्याऽस्यादुदिताऽखिलागमवपुः सत्सूत्रभूषामणिः
सर्वज्ञात्कवयश्च पुष्करभुवो जाता यदीयेच्छया ॥ ४ ॥

यस्सर्वजीवनविबोधविचेष्टितेशो
देव्याश्च वाङ्मयतनोरखिलार्चितायाः ।
नाथस्सदा हरिमहागुणदृष्टितृप्त[1]-
स्तस्मै नमो भगवते परमानिलाय ॥ ५ ॥

ये वै पुरा जगति शार्ङ्गभृताऽमुना च
देवेन भीमगदया हतबाहुवीर्याः ।
देवद्विषां मतिरभून्मनुजेषु तेषां
वाग्योधनेन भगवद्गुणदूषणाय ॥ ६ ॥

संरम्भतश्श्रुतिषु विष्णुपरासु गूढा-
द्विद्वेषतः परगुणेषु महत्सु गाढात् ।
वेदान्तवादकपटैरतिदुष्टवाचां
मायाविनां निरसने स कृतावतारः ॥ ७ ॥

सोऽयं गुणामृतमहाब्धिरिहावतीर्णं
आनन्दतीर्थभगवान्परमो गुरुर्मे ।
यत्पादपद्मरजसा शिरसा धृतेन
सद्यः प्रयान्ति परिशुद्धिमशेषलोकाः ॥ ८ ॥

यस्याऽद्यानां मुनीनां सततहरिगुणध्यानशिक्षायमाणा
वादीन्द्रामत्तनागप्रमितिबलतिरस्कारसिंहायमाना ।
सर्वज्ञस्य श्रुतीनामखिलजनमनोध्वान्तसूर्यायमाणा
व्याख्या विख्यातकीर्तेर्जयति सुमनसां कर्णपूरायमाणा ॥ ९ ॥

येनैकान्तयतात्मनामृजुवरेणाऽचार आचार्यवान्
संन्यासेन निजा स्वयं प्रकटिता निस्सङ्गता संसृतौ ।

---

१ 'क' —दृष्टतृप्तः

श्लाघ्यः पारमहंस्य आश्रमवरो यच्छीलगङ्गाजल-
स्नातो व्यक्तमयोग्यसङ्गमभुवो दोषात्पुनर्मोक्षितः　॥ १० ॥

लेशेनोद्भासितांशां भुवि मनुजमतिं वीक्ष्य विज्ञानशक्तिं
शास्त्रव्याख्यां च चित्रां प्रविततयशसः प्राश्निकानां प्रसङ्गे ।
यस्य स्तोतुं प्रवृत्ताः प्रवरगुणमयीं प्रस्खलन्त्या स्ववाचा
प्राज्ञाः प्रोद्यत्प्रमोदप्रचुरभरनमत्साश्रुकण्ठा भवन्ति　॥ ११ ॥

तस्यास्य चारुचरणप्रणतिं प्रपन्ना
गोभिर्विधूततमसः सुनयामृतानाम् ।
उद्गारिणीभिरिह सद्गुणराजभावं
विप्रा व्रजन्ति विशदा विततामिरुच्चैः　॥ १२ ॥

स्पृष्टं करेण विषमप्यमृताय दृष्टं
यस्योदयस्सभगवान्यदु राति किंचित् ।
तद्भेषजं गदवतां प्रतिकृतमायु-
र्वेदे सुसिद्धममुनेत्यविचार्यमेतत्　॥ १३ ॥

योद्धॄणां राघवार्थे कृतमहितरणो योऽद्वितीयो द्वितीयो
विष्णोः कृष्णप्रियार्थं पुनरपि विपुलैस्संयुगैर्व्यक्तकीर्तिः ।
यद्वीर्यं योधवीरैः कृतनुति जगतां सप्तके सप्तके वा
देवेऽस्मिन्जैत्रशक्तिर्निवसति सकलेत्यत्र किं विस्मयः स्यात्　॥ १४ ॥

सब्राह्मणोपनिषदो निखिलास्सुसिद्धा
वेदाः स्फुटं यदनधीतवतस्स्वशाखाम् ।
यान्वै पठन्ति मुनयोऽप्यसकृद्गुरुभ्यो
वेत्तुं तदस्य महिमायमचिन्तनीयः　॥ १५ ॥

ज्योतिश्शास्त्रं यदेकं भवति भुवि भविष्यत्यतीते च साक्षा-
च्चक्षुः प्रत्यक्षमस्य प्रकटमपि तदाद्यङ्गषट्कं यथास्वम् ।
को ह्यस्मात्पञ्चरात्रेष्वपरिमितभिदास्तन्त्रसारप्रणेतु-
र्विद्याः पौराणिकानां बहुविधविशयच्छेत्तुरन्यः प्रवेद　॥ १६ ॥

हव्यं गृह्णाति सर्वक्रतुषु मखपतिर्योऽनुयज्ञेशमीशो
मन्त्राणां देवतानां प्रतिहृदयगतोऽप्यृत्विजां प्रेरकश्च ।
सोऽयं कर्मप्रणेता हरिगुरुविहितः कर्मणां[1] सत्प्रयोग-
न्यायानां सूत्रजातं यदि च बुधजनैरर्थ्यते किं न कुर्यात् ॥ १७ ॥

रामक्रीडामनुविहरता पूर्वमापूर्णभक्त्या
तेन ज्ञाता न किमु विमलास्तत्कथाग्रन्थकोटयः ।
सोऽयं रेजे कुरुषु विजयी सर्वतो भारताग्र्यो
जानीतेऽतः प्रविततमतिर्भारतार्थान्कृतार्थः ॥ १८ ॥

भाष्यन्ते ह्यपरिमितास्समस्तवेदे-
ष्वेतेन प्रतिपदमप्रयत्नमर्थाः ।
एकैकं सुकरतरं तदेषु भाष्यं
किं न स्यात्सुरवरसेवितेन तेन ॥ १९ ॥

प्रत्यक्षस्य स्वहृदि विशदे सत्यकामस्य कामान्
साक्षात्कर्तुः खलु भगवतो भ्रूनिदेशाद्द्युदेशाः ।
प्राप्ता देवैः प्रतिपदमसौ नित्यमासेवितस्तै-
स्तेषां रूपं[2] स्थितिमपि बलं वेत्ति चित्रं किमेतत् ॥ २० ॥

गन्धर्वविद्यानिपुणस्य नित्यं
गन्धर्ववर्यैरनुगीतकीर्तेः ।
कलाश्च शेषा हृदये गुरोर्नः
करोल्लसत्कन्दुकवद्विभान्ति ॥ २१ ॥

एवं धर्मार्थदर्शी नृपनयकुशलो न्यायवित्सुप्रमाणै-
स्सर्वज्ञस्तत्वमार्यैः[3] क्षितितलमगमत्केवलं संप्रणेतुम् ।

---

१ 'क' 'ख'—कर्मणा

२ 'ख'—रूढं

३ 'घ'—तत्वमार्गं

यस्मिन्गुह्ये स्म देवा अपि मुनिपितृभिः प्राय आलोच्य नित्यं
निष्ठां नाऽयान्ति भूयश्चिरतरभगवद्भक्तिभिस्साधयन्ति ॥ २२ ॥

त्रेधाऽवतारमवनाय सतां बलित्थे-
त्याद्या श्रुतिर्भगवती गुरुमेनमाह ।
मुख्यानिलोऽतिबलवान्मतिरीशधेना
नेतेति पृक्ष इति मध्व इति क्रमेण ॥ २३ ॥

प्रणम्य सम्यक्प्रणतेष्टदं तं
व्याख्यां करोम्यद्य यथावबोधम् ।
तस्याऽज्ञयैवानुगृहीतबुद्धिः
सत्सूत्रभाष्यस्य कृतस्य तेन ॥ २४ ॥

आञ्जस्येनैकमप्यर्थं लेशतो वक्तुमुत्सहे ।
सहस्रार्थस्य भाष्यस्य प्रसन्नास्सन्तु सद्गुणाः ॥ २५ ॥

**नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम्।**
**ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥**

इत्यनेन श्लोकेनेष्टदेवतागुरुनमस्कारं करोति । मङ्गलाचरणार्थं, शिष्टाचार-परिपालनायाविघ्नेन ग्रन्थपरिसमाप्त्यै, देवतागुरुभक्त्योर्विद्यान्तरङ्गत्वाख्यापनाय[1] च वस्तुनिर्देशं करोति । अनेन चाधिकारिविषयप्रयोजनसंबन्धाञ्छास्त्रस्यारम्भ एवापेक्षितान्दर्शयति । अधिकारस्य साधनान्तर्भूतत्वात् "अध्ययनमात्रवत" इत्यादिना साधनाध्याये प्रतिपादितोऽधिकार्यत्राप्यथशब्दाक्षिप्त एव भाष्यकारेण 'नारायणं नत्वा' इति सूचितः अध्ययनवान्भक्तिमांश्चेति। नमस्कारस्य भक्ति-पूर्वकत्वात् । भक्तेश्च विष्णुनिष्ठाया अध्ययनवत एव प्रायेण संभवात् । नारायणो विषयः । नारायणप्राप्तिरूपो निर्दुःखानन्दलक्षणो मोक्षः प्रयोजनमुक्तं 'गम्य'-मिति । संबन्धो दातृदेयलक्षणादिकः । तद्भावमोक्षपक्षे दातृदेयग्रहीत्रभावान्न

1 'ख' 'घ'—त्वख्यापनाय

संबन्धः संभवी । प्रतिपाद्यप्रतिपादकलक्षणः संबन्ध इति चेन्न । अविषयत्वेनाप्रतिपाद्यत्वात् । ब्रह्मणोऽविषयत्वमनपनोद्यैव प्रतिपादयति शास्त्रमिति च विरुद्धं । वन्ध्यात्वमनपनोद्यैव मातुर्जातः पुत्र इतिवत् । न चाविषयस्य लक्ष्यत्वं । वाच्यस्यैव लक्ष्यत्वादिति वक्ष्यत्याचार्यः । न च शारीरः शास्त्रस्य विषयः । प्रमाणान्तरसिद्धत्वाद्धेयत्वाच्च । शारीरत्वमेव हेयं न तद्गतचैतन्यमिति चेन्न तद्गतत्वस्यापि हेयत्वात् । चैतन्यं त्वविषय इत्युक्तं । "आत्मैकत्वविद्याप्रतिपत्तय" इति तदुक्तत्वादैक्यं शास्त्रस्य विषय इति चेत्तदप्यसारं । जीवब्रह्मैक्यस्यानिरूप्यत्वात् । तत्किं तद्वतो[1] भिन्नमुताभिन्नम् । भिन्नं चेत्सत्यं मिथ्या वा । सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे भेदस्य सत्यता स्यात् । अभिन्नं चेज्जीवत्वे ब्रह्मत्वेऽपि स्वयंप्रकाशत्वेन नित्यसिद्धमिति नोपदेष्टव्यं । अज्ञानं तु तत्पक्षे स्वयंप्रकाशस्य कस्मिंश्च न संभवतीति भावः । अत एवाधिकारी दूरतो निरस्तः । ब्रह्मात्मैक्यापरोक्षलक्षणं मोक्षफलमपि प्रत्याख्यातं । ऐक्याभावादज्ञानाभावाच्च । एवमधिकारिविषयप्रयोजनाद्यभावान्न तत्पक्षः श्रेयोऽर्थिभिः श्लाघनीयः । नारायणस्य सर्वोत्तमतया सर्वश्रुतिवाच्यत्वाद्भिन्नानां च जीवानां स्वयंप्रकाशत्वेऽपि सविशेषत्वेन तत्राज्ञानसंभवात्स्वयोग्यतानुरोधेनाधिकारादिसंभवादत्रायमेव पक्षः श्रेयान् । समन्वयाविरोधसाधनफलानि चाध्यायचतुष्टयेन प्रतिपादनीयान्यनेन श्लोकेन सूचयति । श्रुतीनां ब्रह्मवाचकत्वेन सम्यगन्वयः समन्वयः । सच वाक्यपदादीनां प्रत्येकमस्ति । तेन चानन्तगुणं ब्रह्म प्रतिपाद्यते । तत्र च प्रमाणाविरोधं साधयति द्वितियाध्यये । एवं वस्तुनिर्णयार्थमध्यायद्वयं । तत्र पुरुषेण किं कर्तव्यमित्याकांक्षायां दृढनिर्णीतपूर्णगुणब्रह्मप्राप्तिसाधनमधिकारिणो विधीयते तृतीये । चतुर्थे तु तद्दर्शनात्तस्य संसारमोक्ष आनन्दभोगश्च फलम् । तत्र सर्वगुणसंपन्नो नारायणो निर्दोषस्समाधिकरहितोऽत एवावश्यं द्रष्टव्यः । दृष्ट्वा च तं परमसुखं[2] विन्दते पुरुष इत्यभिप्रायः । नारायणपदेन चैतत्समन्वयाद्यर्थचतुष्टयं विशेषणपदचतुष्टयोपदिष्टमभिप्रैति । अराणां दोषाणां विरुद्धत्वान्नारा गुणाः,

१ 'ख'—तद्वता

२ 'घ'—परमं सुखं विन्दत इत्यभिप्रायः ।

तेषामयनत्वात्तैः सहेयत इति वा नारायणः । अतो नारायणशब्देन गुणोदीर्णत्वं वक्ति । उदीर्ण उदार उत्कृष्टः पूर्ण इत्यर्थः । अराणामयनं न भवतीति योजनायां दोषवर्जितत्वं । नारं चेतनविशेषसम्बन्धित्वाज्ज्ञानं, तेन नारेण ईयत इति च नारायणत्वं । ज्ञानविषयत्वमेव च ज्ञेयत्वं । न रीयंत इति नरा मुक्ताः, तेषां समुदायो नारः, तेनेयत इति च नारायणत्वं । तदेव गम्यत्वं च । एवंभूतः समुद्रशायी नारायणः । अथ वासुदेवाख्यो गुणोदीर्णशब्दोक्तः सर्ववसनोत्कर्षक्रीडाज्ञानादिगुणैरुच्चत्वात्[1] । सम्यग्दोषकर्षणात्संकर्षणो दोषवर्जित इत्युक्तः । प्रकृष्टद्युतिमेयत्वात्प्रद्युम्नो ज्ञेयः । ज्ञानिनः प्रति प्राप्तिनिरोधरहितत्वादनिरुद्धो गम्यशब्दार्थः । एवं[2] पञ्चमूर्तित्वमपि सूचयति । तथा प्रतिपिपादयिषितत्वादस्मिञ्छास्त्रे । तमेतं गुरूंश्च ज्ञानाश्रयत्वेन नारायणशब्दवाच्यत्वान्नत्वा सूत्रार्थ उच्यते । बहुवचनं बहुमानार्थं । चशब्दः पृथङ्नमस्कारार्थः । 'अपि'शब्दात्सूत्रकारमपि । यद्यपि शास्त्रप्रतिपाद्या परदेवतैव भाष्यकारस्य गुरुः, स एव सूत्रकर्ताऽपि, तथाऽपि देवताभक्त्या, स्वगुरुभक्त्या, शास्त्रगुरुभक्त्या च तमेव नारायणं पृथङ्नमस्करोतीति गम्यते । नारायणपदेनैव गुरुनाम चोवाच । आ समन्ताद्विशिष्टः स एव हि व्यासोऽपि । नराणामुत्तमगतित्वेन विशिष्टत्वात् । नारायणस्य नमस्कारोऽप्यष्टाङ्गः कृतो नत्वेत्युच्यते, तथा कार्यत्वज्ञापनार्थं । तं नत्वा स एव सूत्रार्थ उच्यत इत्यर्थः[3] । अयं हि तावत्प्रणवार्थः । अकारोऽन्याभावविरुद्धवाची कारणत्वेन सर्वजगतोऽन्यत्वं, सर्वदोषाभावं सर्वगुणसंपन्नत्वेन जगद्विरुद्धलक्षणत्वं च ब्रह्मणो वदति[4] । तथाच भगवती श्रुतिः "अः इति ब्रह्म" इति सर्वतो विलक्षणमकारार्थं ब्रह्म ब्रवीति । उकारमकाराभ्यामुत्कृष्टतया मितत्वमुच्यते । व्याहृतीनामपि भूमत्वाद्भावनशीलत्वेन वर्तमानत्वात्सुत्वेन वृत्तेः स्वातन्त्र्याच्चायमेव वाच्यः । त्रिपदया च गायत्र्या त्रिवर्गात्मकेन पुरुषसूक्तेन च । सोऽयं विष्णुर्वेदैरेक एवोद्गीतस्तदर्थनिर्णायकैस्सूत्रैः प्रतिपाद्यते ।

१ 'घ' —उच्यमानत्वात् ।
२ 'ख' 'घ'—एवंच
३ 'घ'—सूत्रार्थ इत्युच्यते ।
४ ,,—वक्ति ।

**द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावततार ।**

---

अतः **सूत्रार्थ उच्यत** इति समस्तवेदोपबृंहकेतिहासपुराणादिशब्द-राश्यर्थभूतः सूत्रार्थो भाष्यत इति प्रतिज्ञा क्रियते । कथमेतेषां सूत्राणां प्रामाण्यमिति चेदाप्तिमूलत्वाच्छ्रुतिमूलत्वाद्युक्तिमूलत्वाच्चेति ब्रूमः । आप्तिस्तावत्, प्रसक्तिश्रोतृवक्तॄणामानुकूल्याद्भवति । तत्र प्रथमतः प्रसक्तिं दर्शयति— **द्वापरे सर्वत्र ज्ञान आकुलीभूत** इति । द्वावेव धर्मपादौ परं यस्मिन्युगे प्राप्ते, ततः क्रमादपचयोऽन्त[1] एकोऽवशिष्यते तस्मिन्द्वापरे । सर्वत्र, मनुष्याणामृषीणां देवानां च । केषांचिदिदं वा तत्त्वमदो वेति संशयो बभूव । तत्र चैकतरप्राधान्यं केषांचित्, अन्यतरप्राधान्यमन्येषां, इदमेव नान्यदित्यन्येषां, तद्विपरीतमपरेषामिति ज्ञानमाकुलीबभूव । **तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थित** इति श्रोतॄन्दर्शयति । इदमेव तत्त्वं नान्यदिति सम्यग्ज्ञाननिर्णयापेक्षयेन्द्रादिभिरर्थितो ब्रह्मा रुद्रश्च[2] । ततस्तैः सर्वैरुपगम्योत्तमाधिकारिभिरलब्धतत्त्वोत्कण्ठापरिखिन्नहृदयैरनन्यशरणत्वेन सकरुणमभिष्टूय प्रसादितोऽर्थितो भगवान्नरायणो व्यासत्वेनावततारेति वक्तृस्वरूपमाह ।

> "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
> भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥

इत्यादावशेषत इति विशेषणान्निरतिशयज्ञानादिगुणवान्भगवच्छब्दार्थ उक्तः स्यात् । गुणगुण्यभेदाभिप्रायात् । नच गुणानां परस्परं भेदः । विशेषाङ्गीकारेणैव बहुवचनाविरोधात् । ननु कथमेकस्यैव गुणगुणिभावः । गुणव्यतिरिक्तो हि गुणसंबन्धेन[3] गुणवान् । दण्डव्यतिरिक्तो दण्डीतिवत् भिन्नयोरेव तथानुभवादिति चेन्न । प्रत्यक्षत एव दण्डदण्डिनोर्भेदानुभवात्संबन्धापेक्षया दण्डीति युज्यते । नच गुण-

---

१ 'ख'—अन्ततः

२ 'घ'—अर्थितौ ब्रह्मरुद्रौ

३ 'ख'—गुणी गुणसंबन्धेन

गुणिनोर्भेदोऽनुभूयते। 'विज्ञानमानन्दं ब्रह्म' इत्यादिसामानाधिकरण्येनाभेदप्रतीतेः । लोके च 'शुक्लः पट' इत्यादौ । तत्र शौक्ल्यसंबन्धापेक्षया शुक्लत्वमिति चेन्न । 'शुक्लो वर्ण' इति प्रयोगदर्शनात् । तथाच श्रुतिः 'श्वेतं रूप'मिति, 'तस्य ह वा एतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्ण' मिति च । शौक्ल्य-मित्यादिव्यवहारो निष्कर्षार्थः स्वरूपत्वमितिवत् । सामानाधिकरण्यं हि सर्वेषा-मभेदे प्रमाणम् । 'मृद्घट' इत्यादिसामानाधिकरण्येऽपि कारणेनाभेदप्रतीतेर्विनाशाच्च कार्यस्य भेदाभेदोपपत्तिः । तस्माद्द्रव्ये सत्यप्यपायिनां गुणादीनां भेदाभेदौ, यावद्द्रव्यभाविनामभेदः । ननु भेदः प्रतीयते गुणगुणिनोः, पटस्य शौक्ल्यमिति तन्न । विशेषप्रतीतिरेषा 'पटस्य भेद' इतिवत् । नहि पटाद्भेदस्य भेदः । अनव-स्थानात् । यथाच समवायस्य सत्त्वमिति स्वरूपभूतमेव सत्त्वं विशेष्यते । नच तस्य सत्ता भिन्नाऽभ्युपगम्यते वैशेषिकैः । द्रव्यगुणकर्मस्वेव सत्तासामान्यस्य वृत्तेः । अस्ति च "समवायः सन्नि"ति प्रयोगविशेषः । अन्यथा 'समवायः समवाय' इतिवदनर्थकः प्रयोगः स्यात् । नचौपचारिकं समवायसत्त्वम् । मुख्यतस्तदभाव-प्रसङ्गात् । यथाच मायिनां ब्रह्मणः सत्यज्ञानानन्दत्वादि । नचैकस्मिन्ब्रह्मणि विशेषमन्तरेण सत्यज्ञानादिशब्दप्रवृत्तिः, तेषां पर्यायत्वप्रसङ्गात् । निर्विशेषेऽपि वस्तुन्यनृतादिव्यावर्त्यभेदाच्छब्दान्तरप्रवृत्तिरिति चेत् । अनृतादिव्यावृत्त्या ब्रह्मणि विशेषोऽस्ति वा नवा । न चेदेकपदेनैवाखण्डार्थसिद्धेः पदान्तरवैयर्थ्यं, पर्यायत्वं च सत्यादिपदानां स्यात्। विशेषाभ्युपगमेन [1]वेदपदोदितस्य ब्रह्मणोऽनन्तगुण-त्वमित्यस्मन्मतमेवाविस्मृतविमलविबुधमहाजनमानसमाननीयमखिलघस्मरैरस्मृतमपि तैरङ्गीकृतं स्यात् । अथानृतादिव्यावृत्तेरन्यो विशेषो नाभ्युपगम्यते, अध्यस्ता-तद्रूपव्यावृत्तेरेव विवक्षितत्वात्; नच तावताऽद्वैतहानिः, भावरूपविशेषाभावात् , भावाद्वैतं हि तैरभ्युपगम्यते; अतो नाभावेन सविशेषत्वप्रसङ्ग इति यदि ब्रूयात्स प्रष्टव्यः । सोऽभावो ब्रह्मणो भिन्नः किमुताभिन्न इति । भिन्नश्चेद्भेद-धर्मकत्वादभावविशिष्टत्वाच्च ब्रह्मणः सविशेषत्वम् । अभिन्नश्चेदभाव एव वा ब्रह्मैव

---

[1] 'घ'—अनन्तवेदपदोदितस्य

वा स्यात् । अभावत्वे शून्यवादप्रसङ्गः । ब्रह्ममात्रत्वे ब्रह्मपदेनैव तस्य सिद्धेः पदान्तरवैयर्थ्यम् । अनृताद्यभावोपलक्षितस्वरूपत्वान्नाभावविशिष्टो वाक्यार्थ इति चेत्, उपलक्षितत्वविशेषः केन वार्यते। स्वरूपत्वं वाक्यार्थत्वमखण्डार्थत्वं च । तस्मात्सर्वथा सर्ववादिभिरभ्युपेयो विशेषः । सोऽयमेकत्रापर्यायनानाशब्दप्रवृत्तिहेतुः । तेनैकमेवानेकधा द्रव्यगुणक्रियासामान्यादिस्वरूपेण [1]प्रमाणव्यवहारपदवीमध्यास्ते । स च विशेषो वस्तुस्वरूपं स्वनिर्वाहकश्च। नचेदृशं विशेषमन्तरेण सर्वेषां व्यवहारनिर्वाहः। नच गुणगुण्यादिभेदे संबन्धस्संभवी । तस्य संबन्धस्य ततो भिन्नत्वे गुणवदेव संबन्धान्तरापेक्षत्वादनवस्थानात् । अभिन्नत्वे वस्तुमात्रमिति न संबन्धस्स्यात् । तस्माद्गुणगुणिनोर्भेदं भेदाभेदौ वा कल्पयित्वा, तयोस्संबन्धं समवायमन्यं वा कल्पयित्वा, तदनवस्थापरिहारार्थं तस्य स्वनिर्वाहकत्वकल्पनाद्वरमेकस्य द्रव्यस्य गुणादिविशेषरूपेण स्वनिर्वाहकत्वम् । तदेवमेक एव नारायणो ज्ञानैश्वर्यादिसविशेषानन्तगुणगणात्मको भगवान् व्यासत्वेनावततारेति सूक्तमुक्तम् ।

तथाच महोपनिषदि[2]—

"गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।
अतो मिथोऽपि भेदो न तेषां कश्चित्कदाचन ॥
स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु ।
भेदाभावेऽपि तेनैव व्यवहारश्च वर्तते ॥" इति।

ब्रह्मतर्के च—

"अभिन्नत्वमभेदश्च यथा भेदविवर्जितम् ।
व्यवहार्यं पृथक् च स्यादेवं सर्वे गुणा हरेः ॥
अभेदाभिन्नयोर्भेदो यदिवा भेदभिन्नयोः ।
अनवस्थितिरेव स्यान्न विशेषणतामतिः ॥
मूलसंबन्धमज्ञात्वा तस्मादेकमनन्तधा ।

---

१ 'ख'—स्वरूपेण व्यवहार-

२ 'घ'—परमोपनिषदि

**अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत् चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च। तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार।**

---

व्यवहार्यं विशेषेण दुस्तर्कबलतो हरेः।

विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च" । इति ।

**अथे**त्यादेरयमर्थः। **अथा**नन्तरमेव। अन्यत्राव्यापृतसुखप्राप्तौ दुःखपरिहारे चेच्छावतां तयोरुपायं विशिष्टमजानतां **तज्ज्ञापनार्थं** वेदमपपाठा[1]**दुत्सन्न**मनभिव्यक्तमध्यापनेन **व्यञ्जयन्न**ध्येतॄणामल्पशक्तित्वं वीक्ष्य ऋगादिभेदेन **चतुर्धा व्यभजत्**[2]। तांश्च चतुरो वेदान्प्रत्येकं शाखोपशाखाभेदेन **व्यभजत्**; ऋग्वेदं **चतुर्विंशतिधा,** यजुर्वेद**मेकशतधा,** सामवेदं **सहस्रधा,** अथर्ववेदं **द्वादशधे**ति। तेषां सर्वेषामर्थमुपक्रमोपसंहारादितात्पर्ययुक्तिभिर्निर्णेतुं **ब्रह्मसूत्राणि चकारे**ति श्रुतिमूलत्वं युक्तिमूलत्वं च प्रदर्शितं सूत्राणम्।

नन्वागमस्याप्रामाण्यान्न तन्मूलतया प्रामाण्यं सिद्ध्यतीति। तन्न। तदप्रामाण्यस्याप्यागमप्रामाण्यानङ्गीकारे दुस्साधत्वात्। नचैतदनुमासाध्यम्। वाक्यस्याबोधकत्वेऽनुमाप्रयोगवैयर्थ्यात्। वचनायत्तत्वात्साधनस्य। कथं चाबोधकेन[3] परं प्रति साधयेत्। स्वयं वा कथं बुध्येत। प्रत्यक्षं मानं, नाऽगम इत्ययं सिद्धान्तोऽपि स्वगुरुवाक्यादवसीयते। आगमस्याप्रामाण्यं वदतः प्रत्यक्षस्यापि स्यात्। प्रत्यक्षस्य संप्रतिपन्नं प्रामाण्यं चेदागमस्यापि तथा। किंच नाऽगमः प्रमाणमिति वचनं प्रमाणमुताप्रमाणम्। अप्रमाणं चेदागमः प्रमाणमेव। प्रमाणं चेत्स्वव्याहतिः। अतः प्रामाण्यमङ्गीकार्यम्। अथोच्येत, वक्तृज्ञानं शब्दादनुमीयते, आप्तवाक्यस्य ज्ञानपूर्वकत्वाज्ज्ञानलिङ्गकोऽर्थोऽवगम्यते, तज्ज्ञानस्य यथार्थत्वात्, अतो नाव्यवधानेनापि शब्दादर्थनिश्चयः, अव्यवधानेन शब्दार्थनिश्चये प्रमाणाप्रमाणवाक्यविभागो न स्यादिति। मैवम्। न तावद्वक्तृज्ञानमात्रानुमानं शब्दात्। तथासति तद्व्यवधानेनापि शब्दादर्थागमाभावप्रसङ्गात्[4]। अर्थविशेषितं ज्ञानमनुमी-

---

१ 'क' 'ख' – मपाठादु-
२ 'क' 'ख'—व्यञ्जयन् तांश्च
३ 'क' 'ख'—कन्वेन
४ 'घ'—अर्थावगमाभावप्रसङ्गात्

यते चेदर्थः प्रथमतः प्रतीत इति किमत्र व्यवधानम्। प्रतीयत एव केवलं प्रथमतो न निश्चितः, तत्प्रमाणान्तरादेव हि निश्चीयते, तस्मादनुमानात्मकं पुरुषवाक्यमिति चेन्न। शब्दादेवार्थज्ञानं, तन्निर्दोषत्वज्ञानं प्रमाणान्तरापेक्षम्। नच तावता तस्य तत्राप्रामाण्यम्। अन्यथा प्रत्यक्षेऽपि क्वचिन्निर्दोषत्वज्ञानस्य प्रमाणान्तराधीनत्वेन स्वार्थे प्रामाण्याभावप्रसङ्गादनुमानात्मत्कत्वप्रसङ्गाच्च। अत आगमस्य स्वार्थे प्रामाण्यमङ्गीकार्यम्। किं पुनर्वेदशब्दस्य। तदेतदाह भगवान्भाष्यकारो 'वेद'मिति। वेदनादेव हि वेद इत्युच्यते। वेदो न वेदयतीति विप्रतिषिद्धम्। तच्च प्रामाण्यं स्वत एवाभ्युपगन्तव्य प्रत्यक्षवदेव। परतश्चेत्तस्यापि परत इत्यनवस्थानात्। नचानुमादेः गुणविमर्शः क्रियते। दोषाभावे प्रामाण्यसिद्धेः। तस्माद्दोषादप्रामाण्यं दोषाभावे स्वत एव प्रामाण्यम्। दोषस्य प्रामाण्यप्रतिबन्धकत्वाद्दोषाभावान्वयव्यतिरेकित्वात्तस्मादेव प्रामाण्यं न स्वत इति चेत्तदयुक्तं। नह्युत्तंभकाभावान्वयव्यतिरेकित्वेनाग्नेरौष्ण्यमस्वतः स्यात्। तस्मात्प्रमाणानां प्रामाण्यं स्वत एव। दोषादप्रामाण्यम्। दोषश्च बलवत्प्रमाणाज्ज्ञायते। उक्तं च ब्रह्मतर्के—

> "अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा।
> आगमोऽदुष्टवाक्यं च स्वदृक्चानुभवस्स्मृतः।
> बलवत्प्रमाणतश्चैव ज्ञेया दोषा नचान्यथा॥" इति।

किं पुनर्वेदस्यापौरुषेयत्वेनासंभाव्यदोषस्य। पुरुषकृतत्वे ह्यज्ञानविप्रलम्भादिदोषाश्शंक्येरन्। नच वेदनित्यत्वं विना धर्माधर्मादिसिद्धिः। नचादृष्टत्वात्तदभावः। प्रत्यक्षायोग्यत्वात्तस्य। दृश्यन्ते हि सूक्ष्मास्सूक्ष्मदृग्भिस्स्थूलदृग्भिरदृष्टाः। विप्रतिपत्तौ परवाक्याद्युक्त्या वा निर्णयः। युक्त्यविषयत्वात्तु धर्मादौ वाक्यापेक्षा। तस्य च पौरुषेयत्वकल्पने सर्वज्ञत्वतत्कृतत्वादि[1]गुरुकल्पना स्यात्। नच नित्यत्वे किंचित्कल्प्यम्। कर्तरि प्रमाणाभावे स्वत एव नित्यत्वं स्यादेव। नच धर्मादिः कस्यचित्प्रत्यक्षः प्रमेयत्वात्करतलामलकवदित्यनुमानमात्रात्सर्वज्ञसिद्धिः। विप्रतिपन्ना

[1] 'क'—तत्कर्तृत्वादि

दर्यः केनचित्पाटिताः दरीत्वात्संप्रतिपन्नदरीवदित्यादिना सिंहशृङ्गादेरपि सौलभ्यप्रसङ्गात् । योग्यानुपलब्धिविरुद्धोऽयं हेतुरिति चेत्समः पर्यनुयोगः। धर्मादिसूक्ष्मवस्तुनिदर्शिन उपलब्धियोग्यत्वमेव नास्तीति चेदेवं पृथुलगभीरदरीकारणस्येत्यपि[1] समं समाधानम्। प्रत्यनुमा चात्र संभवति, विमतो धर्मदृङ् न भवति पुरुषत्वात्, अविप्रलम्भकत्वनियतश्च न भवति, चैत्रवदित्यादिका। नचापसिद्धान्तोक्तिरियम्। केवलानुमानगम्यसर्वज्ञनिरासपरत्वादस्याः। अथ वाक्यत्वाल्लौकिकवाक्यवत्पौरुषेयत्वं मन्येथाः, सशरीरकर्तृरहितत्वादपौरुषेयत्वं किं न स्यादात्मवत्। "न तस्य कार्यं करणं च विद्यत"इत्यादिवाक्यसिद्धत्वान्नेश्वरस्यात्यन्तासिद्धिरिति चेन्न। सर्वज्ञेश्वरसिद्धौ तत्कृतत्वेन वेदप्रामाण्यसिद्धिः, प्रामाण्यसिद्धौ ततः सर्वज्ञसिद्धिरित्यन्योन्याश्रयत्वात्। तस्मादपौरुषेयो वेदः स्वत एव प्रमाणं चेति सिद्धम्[2] ॥ तच्चोक्तमाचार्यवर्येणैव **वेदमुत्सन्नं व्यञ्जयन्निति** ॥ स्वत एव वेदयतीति वेदः । तथाच पिप्पलादश्रुतिः— "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति" । "न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति" इति च भाल्लवेयश्रुतिः । नित्यत्वे च श्रुतिः—"वाचा विरूप नित्यया" इति । "नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पद"मिति । "श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाच" इति पैङ्गिश्रुतिः ।

"विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः ।
अनादिनित्या सा तच्च विना तां न स गम्यते" ॥ इति कात्यायनश्रुतिः ।

"वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः ।
आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदे"ति महावाराहे ॥

नचानन्विते शब्दशक्तिरिति युक्तम् । अनन्वितार्थस्यैवाभावात् । अन्वितमेव हि सर्वं दृश्यते । एकपदश्रवणेन हि सामान्यान्वयप्रतीतौ विशेषान्वयाकाङ्क्षा

१ 'घ'—दरीविदारणकारणस्येत्यपि

२ 'क'—प्रामाण्यं स्थितम् ।

पदान्तरश्रवणात्पूर्यते। स्वत एवान्वितानामर्थानामनन्वितत्वेन पदवाच्यत्वं कल्पयित्वा तेषामेवान्योन्यान्वितानां वाक्यार्थलक्षकत्वकल्पनाद्वरमन्वितानामेव पदार्थानां वाक्यार्थत्वाश्रयणम्। अनुभवानुकूल्यात्। अन्यथा वाक्यार्थो नाम न स्यात्। ननु श्वेतरूपं पश्यतो हेषाशब्दं खुरनिष्पेषशब्दं च शृण्वतः 'श्वेतोऽश्वो धावती'ति धीर्भवति, तस्मात्प्रथममनन्विताः प्रतीता अर्थाः परस्परान्वयं बोधयन्तीति दृष्टमेवाश्रीयते, न कल्प्यत इति। तदेतदयुक्तम्। यतस्तत्राप्यन्वितानामेव प्रथमतः प्रतीतिः। नहि श्वेतिमा द्रव्यानन्वितः प्रतीयते, हेषादेश्च सामान्यान्वयो ज्ञात एव, वस्तूनामन्वयनियमात्। अन्यथा तैरन्वितत्वेन कथमश्वो विशिष्टार्थः पश्चाद्बोध्येत। नचात्रार्थानामन्वयबोधकत्वम्। नह्यर्थो नाम प्रमाणमस्ति[1]। अनुमा ह्येषा, अयं श्वेतपदार्थोऽश्वो भवितुमर्हति खुरनिष्पेषहेषाशब्दवत्त्वात्संप्रतिपन्नवदिति। तस्मादन्विताभिधायिनश्शब्दाः। एतदपि सूचितं गुरुभिरेव **तद्योगमविजानतां तज्ज्ञापनार्थं वेद**मिति ॥

अत्र च केचिदाचक्षते, सत्यमन्विताभिधायित्वं शब्दानामस्त्येव, तथाऽपि न सिद्धान्विते तेषां शक्तिः किंतु कार्यान्वित एव, तत्रैव व्युत्पत्तिसंभवादिति। तदप्यचारु। कार्यस्य कार्यान्वयाभावात्प्रयोजकभेदकल्पनाप्रसङ्गात्। नच कार्यान्वयान्वयिनीति वाच्यम्। तथाविधवस्तुव्यवहाराभावात्। नहि देवदत्तो देवदत्तपुत्रपुत्रीत्युच्यते। नच कार्यप्रतियोगिकेनान्वयेनान्वयित्वं कार्यस्य। अन्वयित्वं हि नामान्वयधर्मधर्मित्वम्। कार्यधर्मेणान्वयेनान्वयित्वं सिद्धस्य च नास्ति। अतो न कार्यान्वयान्वयिनि शक्तिः कल्प्या ॥

ननु 'शुक्लां दण्डेन गामानये'तिवाक्यश्रवणसमनन्तरमेव श्रोतुर्गवानयनप्रवृत्तिदर्शनात्ततः प्रवर्तकज्ञानमनुमिमीते बालः, विगीता प्रवृत्तिः प्रवर्तकज्ञानपूर्विका प्रवृत्तित्वादस्मत्प्रवृत्तिवदिति; तच्च कार्यज्ञानं भवितुमर्हति प्रवर्तकज्ञानत्वादस्मत्प्रवर्तकज्ञानवदिति चानुमाय पुन"श्शुक्लां गां बधान" "शुक्लमश्वं दण्डेनाऽनये"त्यादि बहुकृत्व एकैकपदान्तरावापोद्धारे दण्डाद्यर्थविशेषावापोद्धारदर्शनात्सर्वप्रयोगे च कार्यानुगमात्प्रवर्तकज्ञानपूर्वकत्वनियमात्प्रवृत्तौ प्रवर्तकद्वारमेव सकलशब्द-

[1] 'ख'—प्रमाणमिति।

शक्तिं जानाति, कार्यस्यैव प्रवर्तकत्वं कार्यान्वित एव सकलशक्तिं बालो निश्चि-नोतीति । तदेतद्बालविभीषिकामात्रं भ्रान्तानाम् । नहि तस्य[1] वृद्धस्यापीदृशी पटुतरा बुद्धिर्भवति, यया शुक्लादिपदसमुदायक्रमं सकृच्छ्रुतमविस्मृत्य तदनन्तरमेवान्यसम्भाषणोत्थानादिकां श्रोतुरानुषङ्गिकप्रवृत्तिं च दृष्टामपहाय गवानयनप्रवृत्तावेव ततः प्रवर्तकज्ञानमनुमिमीते, पुनस्तदर्थसमुदायं च हृदि सन्निधाय, तदेकपदोद्धारे तदर्थोद्धारं, पदान्तरावापे तदर्थावापं, सर्वत्र कार्यानुगमात्कार्यान्विते शक्तिं जानीयात् । किं पुनर्द्वित्रवर्षस्य बालस्य तत्क्षणदृष्टमपि विस्मरतः । स हि 'इयं माता', 'अयं तव भ्राताऽपूपमत्ती'त्यादिवाक्यानां नित्यपरिचितेष्विष्टेषु वर्तमानेष्वर्थेष्वाकाङ्क्षासन्निधियोग्यताभावात्प्रथमं शक्तिं जानाति । पुनश्च 'भ्राता क्षीरं पिबति', 'अहमपूपमद्मि' इत्यावापोद्धाराभ्यामङ्गुलिप्रसारणादिपूर्वकमुक्तविशेषव्युत्पन्नो भवति । पुनश्च 'अपूपमघसं', 'गामयमानैषीदि'त्यादावनन्तरानीतेऽर्थे, एवं वर्तमानेऽतीते च व्युत्पन्नस्य तत एष्यदानयने बुद्धिरवतरतीति सिद्धान्वित एव बालश्शक्तिं जानाति । न प्रवर्तकद्वारं बालो ज्ञातुं शक्नोति । प्रवृत्तावाकाङ्क्षाद्यभावात् । नापि कार्यान्विते, कार्यस्यैवाभावात् । नापीष्टसाधनतां विना कार्यता नामास्ति । कृतियोग्यं कार्यमित्युक्ते निषिद्धस्यापि कार्यत्वं स्यात् । अकर्तुमशक्यत्वं च निषिद्धे समानम् । तस्मादिष्टसाधनव्यतिरेकेण कार्याभावान्न कार्यस्य प्रवर्तकत्वम् । साधनज्ञानस्य प्रवृत्त्यन्वयव्यतिरेकावुभयसंप्रतिपन्नौ । न चातीतेष्टसाधने साधनताज्ञानमस्ति । नष्टस्य साधनस्य साधनताया अपि नष्टत्वात् । तत्पक्षे यत्कार्यज्ञानहेतुरिष्टसाधनज्ञानं तदेव प्रवृत्तिहेतुरस्माकमिति नातीतदूरस्थादौ व्यभिचारः । अपिच सिद्धेऽर्थे प्रामाण्यं नास्तीत्येतद्वाक्यं प्रमाणमुताप्रमाणम् । प्रमाणं चेदिदमेव हि सिद्धेऽर्थे प्रमाणं किमन्यनिवारणेन । अप्रमाणं चेत् सिद्धार्थे प्रामाण्यं न निराकृतम्। किंच कार्यवादिनो न परार्थानुमानं प्रमाणम् । सिद्धविषयत्वात् । नच तत्र विद्धीत्याद्यध्याहारः । अनध्याहृतेऽपि तस्मिन्वाक्यादर्थावगमात् । अप्रयोजकत्वात्तस्याऽधिक्यदोषप्रसङ्गाच्च। विध्यध्याहारेऽप्यनुमायाःस्वार्थे प्रामाण्यमभ्युपग-

1 'क'—नहि वृद्धस्यापीदृशी

**तच्चोक्तं स्कान्दे—**
**नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।**
**किंचित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥**

---

न्तव्यम् । अन्यथा प्रतिवादिनं प्रति ज्ञानविधिमात्रपरं साधनदूषणरहितमसङ्गतं स्यात् । तस्माद्ब्रह्मवाक्यानां च प्रतिपत्तिकर्तव्यतापरत्वेऽपि यथाश्रुतानन्तगुणगणपरिपूर्णब्रह्मणि प्रामाण्यपर्याप्तिरिति न नः किंचिच्छिद्यत इति सिद्धेऽर्थे प्रामाण्यं सुस्थितम् । अतः सुष्ठूक्तं **इष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थमिति** ॥ उक्तेऽर्थे प्रमाणमाह । **तच्चोक्तं स्कान्दे "नारायणाद्विनिष्पन्नमि"** त्यादि ॥

नन्वपौरुषेयो वेदः प्रमाणमस्तु, किमिति पुराणादिष्वादरः क्रियते । उच्यते । वेदानुसारित्वाद्वेदपरिगृहीतत्वाच्च । "ऋग्वेदं भगवोऽध्येमी"त्यारभ्य, "इतिहासपुराणं पञ्चमं वेदानां वेद" मिति हि च्छन्दोगश्रुतिः । "इतिहासपुराणः पञ्चमो वेदानां वेद" इति च । "इतिहासः पुराणो विद्या उपनिषदः श्लोका" इति बृहदारण्यके । "सर्वेषु वेदेषु तथेतिहास" इति पैङ्गिश्रुतिः ॥

"उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः ।
सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः ॥" इति

भाल्लवेयश्रुतिः ।

"वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः ।
पञ्चरात्रं च वेदाश्च विद्यैकैव विधीयत" इति नारायणश्रुतिः ।
"सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ।
सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ॥" इति ब्रह्मतर्के ।

सूत्रकारश्च भगवांस्तत्र तत्रोवाच—"स्मृतेश्च", "अपि स्मर्यत" इत्यादि ॥

यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणं, सर्वज्ञत्वादविप्रलम्भकत्वाच्च । तथाऽपि 'स्कान्दे चोक्तमि'ति प्रौढवादं करोति । सर्वज्ञत्वं तावच्छ्रुतिसिद्धं, "बळित्था तद्वपुषे धायि दर्शत"मिति । इह हि प्रस्तुतस्य बलज्ञानस्वरूपस्य वायोः प्रथमावतारो रामस्याऽऽज्ञाप्रणेता साधको 'मति'शब्दोक्तः ।

द्वितीयं वपुः पूतनाक्षयकृत् 'पृक्ष'शब्दोक्तं, ऋगादिसप्तविद्यानिवासात्मकं चास्य ऋषभस्य तृतीयं वपुर्ज्ञानदोहनार्थं योषासु जातम् । 'दर्श'शब्दः पूर्णवाची, "तानि दश दशेति वै सर्वमेतावती हि संख्या" इत्यादिश्रुतेः । 'दशप्रमति'मिति पूर्णप्रज्ञनामोक्त्या सर्वज्ञत्वमुक्तम् । येन 'शवसा' सुखेन महितषड्गुणस्य विष्णोर्वरणीयान्गुणान् रुद्रादीश्वरा अन्ये च सूरयो 'निरक्रन्त' निरजानत[1]। यत्र चायं 'प्रदिवः' प्रकृष्टज्ञानो मध्वनामा भूत्वा 'मातरिश्वा' गुहायां निहितं विष्णुम् 'आधवे आ समन्तादीश्वरत्वे 'मथायति' प्रकाशयति, असत्यमनीश्वरं जगद्वदद्भिरसुरैर्गूहितं सन्तं प्रकाशयतीत्यर्थः । यत्र च परमेश्वरस्य स्वपितुरिच्छया नीयमानः प्रश्नवीरुधः स्वदन्तेषु पर्यारोहयति चर्वितवच्छकलीकरोतीत्यर्थः ॥

"अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
विश्रुता[2] नृषु जातं च तं विद्याद्देवसत्तमम् ॥" इति नारायणश्रुतिः ।

प्रत्यक्षमेव चैतल्लक्षणं दृश्यते भगवति भाष्यकारे ।

"हनशब्दो[3] ज्ञानवाची हनूमान्मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ॥
भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्तास्सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ॥
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः ॥
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादत" इति भाववृत्ते ।

"साधको रामवाक्यानां तत्समीपगतः सदा ।

१ 'घ'—निरजानन्त ।
२ 'क' 'ख'—विसृता
३ 'घ'—हनुशब्दो

हनूमान्प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितोः ॥
पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ॥
दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततस्स्मृतः ॥
आ समन्तात्पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ।
वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ॥
तेन विष्णोस्तु वर्पाख्यान्गुणानज्ञासिषुः परान् ।
ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः ॥
त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः ।
एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयंभुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ॥ " इति च यजुःसंहितायाम् । अविप्रलम्भकत्वं चास्यावगम्यते । "यद्वै किं च मनुरवदत्तद्भेषजम्" "त्वा दूतासो मनुवद्वदेम" इत्यादिश्रुतेः । "ते वायवे मनवे बाधिताय" इति च ।

"ब्रह्माविष्णू हि[1] सर्वस्य लोकेष्वाप्ततमौ मतौ ।
आप्तास्तदितरे ज्ञेया देवा मुनय एव च ॥ " इति विष्णुसंहितायाम् । वायुरेव हि ब्रह्मा भवति । "वायुर्ह्येव प्रजापतिः । तदुक्तमृषिणा, पवमानः प्रजापति"रिति ।

"य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥"
इत्यादिश्रुतिः[2] ॥

---

१ 'क' 'ख'—ब्रह्मा विष्णुर्हि
२ 'ख'—श्रुतेः ।

**गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।**
**संङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥**
**शरण्यं शरणं जग्मुर्नारायणमनामयम् ।**
**तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ॥**

---

नच बुद्धरूपे विप्रलम्भकत्वं विष्णोश्शङ्क्यम् । तत्र श्रोतॄणामसुराणामयोग्यत्वादन्यथामतिर्जाता, नान्यथावचननिमित्ता । इतरेषां रागादिमत्त्वादन्यथा मतिर्युक्ता[1] । विष्णोस्तु तदभावश्रुतेर्न वक्तृदोषकृतो मोहः । स एव हि तानि सूत्राणि तत्त्वविषयाणि प्रशान्तसंहितायामञ्जसा देवेभ्यो व्याचख्यौ । नच पुराणादिष्वन्यथोक्तिः । यतः सूत्रकर्ता भगवान्व्यास एव पुराणादिकर्ताऽपि । नच तद्वाक्यं क्वचिदप्रमाणमाशङ्क्यम् । आप्तिसाम्यात् । "सर्वत्र भगवत्प्रमाणा[2] भगवद्वचनप्रामाण्या[3]" इति मूलश्रुतिः । पूर्वपक्षसिद्धान्तविभागापरिज्ञानकृतश्च तत्र मोहः स्यात् । तच्च भाषारीतिविशेषाज्ञानाद्भवति । तथाच ब्राह्मे—

"भाषात्रयं न जानाति रीतीनां शतमेव च ।
पुराणार्थं वदन्याति नरकं नात्र संशयः ॥" इति ।

न पुराणानां स्वतोऽन्योन्यं वा विरोधः । शैवादिपुराणेषु दर्शनभाषाप्राचुर्याद्वेदाननुसारित्वमिव प्रतीयते । नतु तदस्ति । तत्रापि विष्णोस्सर्वोत्तमत्वमेव सिद्धान्तसारः । तत्र तत्र तदुक्तेः । पूर्वपक्षाधिक्यं दुर्जनमोहनार्थमिति दर्शनरहस्यम् । तस्मादयमाचार्य आप्ततम इति सिद्धम् । यदुक्तयः क्वापि नान्यथा दृश्यन्ते तत्राऽपि शङ्कमानाः कुत्र निश्चिन्वीरन्निति ॥

गौतमस्य हि वदान्यस्यान्नवन्तमाश्रमं द्वादशवार्षिक्यामनावृष्टावृषयोऽध्यूषुः । तत्राहरहस्तेन समीहितहव्यकव्याभ्यवहार्यातिसर्जनेन सुकृतसमाधि[4]स्वाध्यायप्रवचनाः समवर्तन्त । ततः सत्यां वृष्टौ प्रतिभयविपद्विमुक्ताः प्रतिष्ठासवस्तु महामुनिमनुज्ञापयाञ्चक्रुः । तेन विनिवारिताः सुहृत्तमं तममी स्नेहभङ्गभयान्नात्यवर्तन्त । तस्मिन्काले पतिशिरसः सपत्नीं निष्कासयन्त्या

---

१ 'ग'—अन्यथोक्तिर्युक्ता। २ 'घ'—भगवत्प्रमाणात्
३ 'घ'—भगवद्वचनप्रामाण्यम् ४ 'क' 'ख'—समाहित-

**तदेव ब्रह्म परमं कवीनाम् ।**
**परमं यो महद्ब्रह्म ।**
**वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत् ।**
**स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारत इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥**
**स योऽतोऽश्रुत इत्यादि—**

## ॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ २ ॥

**स हि न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापेत्यादिनाऽश्रुतत्वादिगुणः ॥**

---

एकमेतदिति विद्यात्, तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति" **इत्यादिना सर्वत्रोच्यमानो** विष्णुरेव । तस्मिन्नेव प्रसिद्धस्य ब्रह्मशब्दस्य "एतमेव ब्रह्मेत्याचक्षत" इत्युपदेशात् ॥ ॥ छ ॥

[1]**अतो** व्याप्तः, अत सातत्यगमन इति धातोः । अन्यै**रश्रुतः**, अतः स्वयमेव स्वात्मानं स्वातन्त्र्येण शृणोति । "न ऋते त्वत्क्रियत" इत्यादिश्रुतेः । 'अगतः' अप्राप्तः । सर्वात्मन 'आदेष्टा' वक्ता, 'आघोष्टा' नियोक्ता ॥

"देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।
अत इत्युच्यते विष्णुस्सन्ततो ह्यत उच्यते ॥
तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।
अत इत्युच्यते विष्णुस्सम्यक्श्रुत्याद्यशाक्यतेः ॥
पूर्णत्वाद्भगवान्विष्णुरश्रुतत्वादिनोदितः ।
समस्सर्वेषु रूपेषु सर्वजीवनियामकः ।
इति विद्यात्परं विष्णुं मुच्यतेऽनेन संसृतेरि"त्यैतरेयसंहितायाम् ॥

---

१—"स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञाते"ति समग्रं श्रुतिवाक्यम् ।
२ 'क'—द्यशक्तितः ।

**स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्त इत्यादि च चतुर्वेदशिखायम् ॥**

**नचाऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम्—**

## ॥ ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ ३ ॥

**एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥**

---

**विवक्षितगुणोपपत्तेश्चे**ति प्रसिद्धार्थत्वात्सूत्रभाष्ययोरेकीभावः । ये तु श्रुतीनां ब्रह्मगुणेषु तात्पर्याभावं वदन्ति तन्निरासार्थं[1] विवक्षितपदमुपनिबबन्ध ॥ नहि प्रतिवाक्यमुदीर्यमाणा गुणा वेदैरविवक्षिता इति शोभते । द्रव्यादिपदैरपि हि गुणविशिष्टमेवाभिधीयते नाविशिष्टम् । अन्यथा द्रव्यत्वादीनामेवाभावप्रसङ्गात् । ब्रह्मादिशब्दाश्च पूर्णत्वादिविशिष्टवाचकाः । नच वाक्यार्थः क्वचिदविशिष्ट इति युक्तं, प्रमाणाभावात् । नच प्रामाण्यानुपपत्त्या सत्यादिवाक्यानामखण्डार्थत्वम् । सत्यादिगुणविशिष्टवाचकत्व एव सत्यादिवाक्यानां प्रामाण्योपपत्तेः । निर्गुणविषयत्वेऽनुपपत्तेश्च । 'प्रकृष्टप्रकाशश्चन्द्रमा' इत्यादिवत् । नहि तत्र स्वरूपमात्रं लक्ष्यते, तस्य पूर्वमेव सिद्धत्वात् । नक्षत्रादिवैलक्षण्यगुणस्यैव प्रष्टुर्बुभुत्सितत्वात् । तथाच तदनुक्तावसङ्गतमुत्तरवाक्यं स्यादिति ॥ ॥ छ ॥

**नचे**त्यादेः स्पष्टोऽर्थः । अन्योऽप्यर्थः कल्प्यते । उक्तयुक्तेरेव ब्रह्मणोऽत्र प्रतिपाद्यत्वादादित्यशब्दाच्चक्षुर्मयत्वादेश्च जीवस्यापि परित्यागायोगात्, जीवश्च ब्रह्मैव स्यादिति न वाच्यम् ॥ **अनुपपत्तेस्तु न शारीरः** ॥ ब्रह्मणा **एकस्य** जीवस्य तत्तच्छरीराभिमानानुपपत्तेरेव । यद्यभिमन्येत तर्हि ब्रह्मणोऽपि दुःखित्वं स्यात् । स्यादेतत् । स्याच्चेत्स्यान्नाम, किं नश्छिन्नं? ब्रह्मैव संसरति ब्रह्मैव मुच्यत इति हि ब्रूमः अत्र ब्रूमः, एकमुक्तौ सर्वमुक्तिप्रसङ्गादिति । अनेकाभावान्नायं दोष इति चेत् किं स एकस्त्वमेवासि, आहोस्विदाचार्यः । अहमेव स एक इतिचेदितः पूर्वं मोक्षाभावाद्भविष्यतीत्याशामात्रं स्यात् । श्रुतिप्रामाण्याद्भविष्यत्येवेति चेन्न । उपदेष्टृ-

---

१ 'क' 'ख'—निराकरणाय

आत्मानं परस्मै शंसतीत्यादि—

## ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥

---

भावात् । उपदेष्टारं स्वाप्नमिवाऽप्नवानि, तदुपदिष्टज्ञानात्फलमपि तस्मादिव भवेदिति चेत्तदपि दुराशामात्रम् । भवानेव स्वाप्नवदितिवादिनि तत्ववादिनि तस्मिन्ननुपदेष्टरि[1] का निवारणयुक्तिः । त्वदज्ञानपरिकल्पितं सर्वमिति तदुक्तिरेव युक्तिरिति चेत्त्वमपि तर्हि शिष्यायोपदिशन्निदमस्मदादिकं त्वदज्ञानपरिकल्पितमित्युपदिशसि । अतश्शिष्याज्ञानपरिकल्पितत्वाद्धन्त तव मोक्षं प्रति प्रयत्नो मोघ आसीत् । सर्वथा मोहमयस्य रज्जुसर्पवदपवर्गायोगात् । किंच तादृगाचार्यादुपदेशस्य भ्रममात्रत्वात्तदुद्भूतस्तत्त्वोपलम्भोऽपि भ्रमान्तर्भावी । अतश्चातत्वं दृष्टं तत्वं मन्वानस्य हन्त मुक्तत्वमपि भ्रान्तिमात्रं स्यात् । सत्यमेवं वदामि, तदानीमेव मुक्तत्वमपि भ्रान्तिमात्रमिति, नित्यमुक्तत्वादिति चेत्, संवदसे तर्हि ज्ञानमन्तरेण[2] सर्वदा मुक्तत्वं सत्यं, ज्ञानान्मुक्तत्वमसत्यमित्यहो बहुविरुद्धप्रलापिनो मातृमुखस्य[3] निर्लज्जता । अथ यदि स एक एवाऽचार्यस्तर्हि स्यात्, मुक्तावशेषनिवृत्तिमीक्षमाणो न शिष्यबोधने धुरं धारयीतेत्यास्तामयं विस्तरः ॥ अथान्योऽर्थः, नात्र जीवः प्रतिपाद्यः । एकजीववादे तावदेकस्य सर्वशरीरस्थत्वानुपपत्तिः । तत्तद्गतसुखदुःखाद्यनुसन्धानादर्शनात् । किं वक्तव्यं बहुजीववादे । नच योगिनोऽपि सर्वशरीरस्थत्वं स्वातन्त्र्येण युज्यते ॥ ॥ छ ॥

इतश्च न जीवो ब्रह्म । **"आत्मानं परस्मै शंसति"** **इत्यादिकर्मकर्तृव्यपदेशाच्च** । नह्येकस्य कर्तृकर्मता युज्यते तन्मते । नच जीवब्रह्मैक्यपक्षे तत्त्ववस्तुनः कर्मभावः कर्तृभावश्चेष्यते । इह च सर्वत्रोच्यमानमात्मशब्देनोक्त्वा कर्मत्वेन व्यपदिशति । नचाऽत्मशब्दो जीवे मुख्यः । "द्युभ्वाद्यायतनं स्वशब्दादि"त्यादिना निषिद्धत्वात् । चकारात्परस्मायिति सम्प्रदानव्यपदेशाच्चेत्यभिप्रायः ।

---

१ 'ग'—तस्मिन्ननुपदेष्टरि २ 'क' 'ख'—न्तरेणैव

३ 'क' 'ख'—मुख्यस्य

**एतमेव ब्रह्मेत्याचक्षत इति—**

**॥ ॐ शब्दविशेषात् ॐ ॥ ५ ॥**

**नहि जीवमेव ब्रह्मेत्याचक्षते ।**
**एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एव इन्द्रो य उ एव हरिर्हरति परः परमानन्द इति चेन्द्रद्युम्नशाखायाम् ॥**

**॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥**

---

नहि ब्रह्मत्वे जीवानां मिथो भेदोपदेशोपपत्तिः । आदिशब्दात् "यस्तित्याज सचिविदं सखायमि"त्यादि च । भिन्नयोर्हि कर्तृकर्मभाव औत्सर्गिकः । नचात्रापवादः । नच स्वयमेव स्वात्मानं तत्याजेति शोभते ।

"कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात्सखायमिति चोदितम् ॥
न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात्परमात्मनः ॥
मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वापि ब्रूयादैक्यमथापि वा" ॥ इत्याद्यैतरेयसंहितायाम् ॥ ॥ छ ॥

**शब्दविशेषात् । एतं** सर्वभूतस्थ**मेव ब्रह्मेत्याचक्षते** नान्यमिति ब्रह्मशब्दस्य सावधारणत्वविशेषाच्च न जीवो ब्रह्म । **नहि जीवमेव ब्रह्मेत्याचक्षत** इति श्रुत्यर्थो मन्तव्यः । "सर्वेषु भूतेष्वि"ति वचनात् । नच सर्वभूतस्थस्य सर्वभूतत्वम् । नहि गृहस्थो गृहं भवति । अपिच **नहि जीवमेव ब्रह्मेत्याचक्षते** विद्वांसः । प्रत्युतेश्वरमेव ब्रह्मेत्याचक्षते । तस्यैव पूर्णत्वात् । **नहि** मायिनोऽपि **जीवमेव ब्रह्मेत्याचक्षते,** विपरीतबोधकत्वानभ्युपगमात् । अभ्युपगमे ब्रह्मणो दुःखित्वापातात् । ब्रह्माभावप्रसङ्गाच्च । ब्रह्मत्वे च सति सविशेषत्वापाताज्जीवव्यतिरेकेणेश्वराभ्युपगमाच्च तन्मतेऽपि ॥ ॥ छ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**गामाविश्य च भूतानि धारयाम्यहमोजसेत्यादि ॥**
**नचाप्रमाणकं कल्प्यम् ॥**

## ॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्य-त्वादेवं व्योमवच्च ॐ ॥७॥

**सर्वेषु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न ।**
**अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् ॥**
**सर्वगतत्वेऽप्यल्पौकस्त्वं युज्यते च व्योमवत् ॥**
**सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।**
**सर्वनामाभिधेयश्च सर्ववेदेडितश्च स इति च स्कान्दे ॥**

---

**स्मृतेश्च** । इतश्च न सर्वेषु भूतेषूच्यमानः परमात्मनोऽन्यः । नापि जीवः स परमात्मा । यतः स्मृतौ सर्वभूतहृदयस्थत्वं सर्वाधारत्वं च परमात्मन उक्तम् । ये तु जीवपरयोर्व्यावहारिकभेदवादीनि सूत्राण्येतानि योजयन्ति तद्व्यपोहार्थमाह— **नचाप्रमाणकं कल्प्यमिति** । व्यावहारिकभेदस्य मिथ्यात्वे त्वसद्भेदवाचित्वादप्रमाणानि सूत्राणीत्युक्तं स्यात् । न चानिर्वाच्यं कल्प्यम् । तस्याप्रमाणकत्वेन निरस्तत्वात् । सत्यत्वेऽपसिद्धान्तः । नच भेदभ्रान्तिः क्वापि सत्यभेदसद्भावं विना सम्भवति । नहि कुहचिदप्यवितथकलधौतं विना वितथकलधौतप्रतीतिस्सम्भवति । नचौपाधिको भेदो ब्रह्मणः कल्प्यः । निरंशत्वादेकदेशसम्बन्धासम्भवादुपाधेः । कृत्स्नप्रासे सत्यनुपहितोपहितविभागासम्भवात् । अतोऽ**प्रमाणक**मिदं मतं सूत्रार्थत्वेन **न** कल्पनीयम् । सूत्रनिषेध्यत्वात् ॥ ॥ ६ ॥

**अर्भकौकस्त्वादि**त्यादि । **सर्वेषु भूतेष्वि**त्यल्पौकस्त्वमुच्यते । सर्वजीवहृदयसुषिराणामल्पत्वात् । **चक्षुर्मयत्वादिना**ऽऽदित्यशब्देन च जीवव्यपदेशश्चास्ति । तदत्रेश्वराभ्युपगमे का गतिरिति चेदल्पस्थानस्थत्वेन **चक्षुर्मयत्वादिरूपेण** चाऽऽदित्यादिशब्दवाच्यत्वेन **च तस्यैव विष्णो**र्निचाय्यत्वमित्यभिप्रायः ।

**॥ ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥८॥**

**जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न ।**
**सामर्थ्यवैशेष्यात् ॥**
**उक्तं हि गारुडे—**
**सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।**
**स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोरिति च ॥**

**॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥**

---

"ब्रह्मणस्सारभूतस्तु प्रद्युम्नो भगवान्हरिः ।
स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ॥
ततश्च सर्वभूतेषु जीवानां विनियामकः ।
स एवाऽदित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ॥
स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ॥
प्रतिपूरुषमेतस्मात्स्थितो विष्णुर्नियामकः ।
आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रति प्रति ।
स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ॥
आपूरयन्सर्वलोकान्प्रकाशेन जनार्दनः ।
आदानात्सर्वजीवानामत्तृत्वात्प्रलयेऽपि च ।
आत्मेत्युक्तस्स भगवाञ्जगतः स्थावरस्य च ॥" इत्यैतरेयसंहितायाम् ।

"पूर्णदर्शनशक्तित्वाच्चक्षुर्मय इतीरितः ।
तादृक्श्रवणशक्तित्वात्तथा श्रोत्रमयः स्मृतः ।
छन्दोमयस्सत्यकामो मन्तृवक्तृबलात्मक" इति च ॥  ॥ छ ॥

**इति सर्वगतत्वाधिकरणम्**

**जन्माद्यस्य यत इत्युक्तम् ।**
**तत्रात्तृत्वं, स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वमित्यदितेः प्रतीयते ।**
**पुंलिङ्गं च कूटस्थोऽक्षर उच्यत इत्यादिवदिति ।**
**अत्रोच्यते—**

**॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥**

**नहि चराचरस्य सर्वस्यात्तृत्वमदितेः ॥**
**स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।**
**वासुदेवो वरः पुंसामितरेऽल्पस्य वा नवेति स्कान्दे ॥**
**एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ।**
**यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहाऽयुषेऽस्तु देव इति च श्रुतिः ॥**

**॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥**

**अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च ॥**
**नेहाऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ।**
**सो त्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥**
**शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् ।**
**तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुः ॥**
**तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह ।**

---

**जन्माद्यस्य यत** इति विष्णोस्सर्वकर्तृत्वात्तृत्वाद्युक्तम् । तत्रात्तृत्वमन्यस्य स्याददितिशब्दवाच्यस्येत्याशङ्क्य परिहरति । **स यद्यदेवासृजत— स** संवत्सरो **यद्यदेवासृजत, स** संवत्सरस्रष्टाऽऽत्मा **तत्तदत्तुं** मनो**ऽध्रियत । अत्ताचराचरग्रहणात् । एकः पुरस्ता**दित्यस्यायमर्थः । **यो**ऽस्य जगतः **पुरस्तादेक एव, यत इदं** जगद्बभूव, **यश्च भुवनस्य गोपा बभूव ॥ साम्पराये** प्रलये मुक्तौ च ॥ ॥ छ ॥

**प्रकरणाच्च** । "नैवेह किंचनाग्र आसीत् मृत्युनैवेदमावृतमासीदि"त्यारभ्य "तस्यार्चेत आपोऽजायन्त तद्यदपां शर आसीत् तत्समहन्यत सा पृथिव्य-

**अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ।**
**सोऽसृजद्भुवनं सर्वमाद्यार्थं हरये विभुरिति च ब्रह्मवैवर्ते ॥**

**॥ इत्यत्तृत्वाधिकरणम् ॥ २ ॥**

**सर्वाचैकः पर उक्तः ।**
**ऋतं पिबन्तौ सुकृतस्य लोक इति पिबन्तौ प्रतीयेते ।**
**तौ कावित्युच्यते—**

## ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ११ ॥

**गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव ।**

---

भवत् तद्रेत आसीत्संवत्सरोऽभवत्तज्जातमभिव्याददात् स भाणमकरोत्सैव वाग-भवदि"ति **अप्संवत्सरसृष्ट्यादिनो**च्यमानोन तत्प्रकरणत्वावगमाच्च विष्णुरेवात्तेति निश्चीयते ॥　　　　॥ छ ॥

**इत्यत्तृत्वाधिकरणम्**

"**ऋतं पिबन्तौ सुकृतस्य लोके** गुहा प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ती"ति काठके कथ्यते । **ऋतं** शास्त्रविहितकर्मभिरागतं फलम् । '**सुकृतस्य लोकः**' सुकृतनिर्मितं शरीरम् । 'परमं' ब्रह्मावासत्वात् । 'परार्धं' परस्य स्थानं, परस्यान्यस्य जीवस्य, अभिमन्यमानत्वात् । "स ह्यऽयस्तः पितुरर्धमेयाये"ति हि श्रुतिः । अत्र **पिबन्तौ** द्वौ **प्रतीयेते तौ का**विति संशयं द्योतयति । **नच जीवे समन्वयोऽभिधीयत** इत्युत्तरवचनात्पूर्वपक्षोऽपि सूचितः । अत्रैष संग्रहः । तौ किं जीवपरावुत पररूपे एवेति संशयः । जीवपराविति पूर्वः पक्षः । पातृत्वात् । नहि परस्यापिपासोः परमार्थतः पातृत्वोपपत्तिः । जीवपरपक्षे तु च्छत्रिन्यायेनोपपत्तिः । नच परपक्षे द्विवचनं युज्यते । छायारूपत्व च ज्योतिरात्मनस्तस्य न स्यात् । जीवस्य तु तमस्सम्पृक्त[1]त्वाद्युक्तमेव तादृग्रूपत्वम् । एव **तौ कविति** मीमांसाया सिद्धान्तमारभते[2] । **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** ॥

---

१ 'क''ख' - संवृत,　　　　२ 'ग'—सिद्धान्त उच्येते ।

**घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगामेत्यादिना तद्दर्शनात् ॥**
**आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।**
**निविष्टो हृदये नित्यं रसं पिबति कर्मजमिति बृहत्संहितायाम् ॥**
**शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।**
**पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचिदिति पाद्मे ॥**
**यो वेद निहितं गुहायामित्यादिना प्रसिद्धं हिशब्देन दर्शयति ॥**

---

**गुहां प्रविष्टाविति** हेतुगर्भ विशेषणम् । विष्णोरेव हि गुहाप्रवेशस्तत्र तत्र श्रुतिषु प्रसिद्ध इति हिशब्दव्याख्याने दर्शयति । 'घर्मौ' घृष्टत्वेन घर्षकत्वेन च मितौ । 'समन्तौ' सम्पूर्णौ । प्रकृतिपुरुषकालव्यापिनौ यौ देशतः कालतः गुणतः शक्तितश्च । **तयोः** सेवां **मातरिश्वा जगाम** । द्युदेव्या वायुपत्न्याः स्तन्यं 'पयो' 'दिधिषाणाः' पिपासन्तो 'देवा' द्विरूपं तमेक'मवेषन्' अवनमैच्छन्, अन्वैच्छन्निति वा । विदुश्च तं 'अर्कं' अरं कंरूपं, 'सहसामानं' सहवायुम् । "एष उ एव सामे"ति हि श्रुतिः । "वागेवर्क्श्रुतौ प्रोक्ता प्राणस्सामेति कीर्तित" इति तार्तीये । **तद्दर्शनात्** उक्तविशेषणैर्निर्णीते विष्णौ द्विवचनदर्शनात्, "एकस्सुपर्णः स समुद्रमाविवेशे"त्यादिना च तच्छब्देनैकवचनेन परामर्श**दर्शनात्**, तस्यैव समुद्रनिवेशिनोऽखिलभुवनदर्शिनो"ऽपश्यमन्तितत" इति गुहाप्रविष्टत्व**दर्शनाच्च**, तमेव 'सुपर्णं' सुष्ठुपरमानन्दरूपमेकं सन्तं 'विप्रा' विशेषेण प्रकृष्टज्ञानिनो 'वचोभिर्बहुधा कल्पयन्ती'त्येकस्यैव बहुनामरूपत्व**दर्शनाच्च पिबन्तौ विष्णुरूपे एव ॥**

"चतुश्शिखण्डां तु रमां द्विरूपो भगवान्हरिः ।
परमानन्दरूपत्वात्सुपर्ण इति नामकः ॥
रमयामास तस्यां च निषण्णस्सर्वदैव सः ।

---

१—"दिवस्पयो दिधिषाणा अवेषन् विदुर्देवाः सहसामानमर्कम् ।"
"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेह्लि स उ रेह्लि मातरम् ॥
सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ॥" इतिश्रुतिवाक्यशेषो द्रष्टव्यः ।

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परमिति—**

**॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥**

**पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः ।**
**यतोऽतो ब्रह्मशब्देन सर्वेषां वचनं भवेत् ॥**
**एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् ।**
**अमिता हि गुणा यस्मान्नान्येषां तमृते विभुमिति ब्राह्मे ॥**
**नच जीवे समन्वयोऽभिधीयते ।**

---

एक एव च विष्णुस्स प्रविष्टः[1] क्षीरसागरम् ॥
सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।
परिपक्वेन मनसाऽपश्यमित्याह तं त्वजः ॥
मातेव व्यञ्जकत्त्वात्तं प्राणस्थं वाक्सरस्वती ।
लिहते लिह्यत इव प्राणस्तेन तु सा सदा ॥
स्वयं तु भगवान्विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि वा ॥" इति ऋग्वेदसंहितायाम्[2] ।

नचा"नश्नन्नन्य" इति श्रुतिविरोधः । नह्यत्र पराधीनतया भोगः, नाप्यप्रियभोगः । नच तन्निमित्तोच्चनीचता विष्णोः । किन्तु जीवसमवेते भोगे स्वीकारमात्रमुच्यते । अतो न पातृत्वविरोधश्च ॥ ॥ छ ॥

**विशेषणाच्च ।** "**यस्सेतुरि**"त्यादिना यजमानानामाश्रयत्वेन ब्रह्मशब्देनैकवचनेनाक्षरशब्देन च **विशेषणाच्च पिबन्तौ विष्णुरूपे एव ।**

"अक्षयाद्रतिरूपत्वादक्षेषु रमणादपि ।
अक्षरं भगवान्विष्णुरोमित्युच्चत्वहेतुत" इति तार्तीये ॥

ये त्वत्र जीवपरयोस्समन्वयं ब्रुवते तन्नेत्याह—**नच जीवे समन्वयोऽभिधीयत** इति । तदेव ब्रह्म समन्वयादवगम्यत इति प्रतिज्ञातत्वात् । यत्तूक्तं जीवपरपक्षे

---

१ 'ख'—स्सम्प्रविष्टः    २ 'क''ख'—ऐतरेयसंहितायाम् ।

**सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽरुवण्यो मैवाऽरुवण्यो मैवाऽरुवण्य इति पैङ्गिश्रुतेः ।**

---

छत्रिन्यायेनोपपत्तिरिति । तदसत् । एकत्र विद्यमानं हि च्छत्रित्वमन्यत्रोपचर्यते । नचात्र जीवस्य पातृत्वं मुख्यं संवदसे । मिथ्यान्तःकरणसम्बन्धकृतत्वाभ्युपगमात् । संवदसे चेज्जीवस्य मुख्यतस्तदभिन्ने परमात्मनि किं वदसे । तस्मान्नात्र च्छात्रिन्यायानुप्रवेशः । अस्मत्पक्षे तु पानस्वातन्त्र्यान्मुख्यत एव परः पातेत्युच्यते । अन्यस्थाने पिबन्तावित्युक्तेश्च न जीवपरपक्षोऽत्र युक्तः ।

यत्पुनरिदमवादि, छायारूपत्वं परस्य नोपपन्नमिति[1] । नायं दोषः । अमरासुराणां छायातपाविति योजनायोगात् । अमराणामाह्लादकौ, असुराणां तापकावित्यर्थः । जीवस्य च्छायारूपत्वं परस्याऽतपरूपत्वमभ्युपगच्छन्परस्परविरुद्धलक्षणयोस्तयोरभेदवार्तां नानुवर्तेत । नच जीवस्य तमःसम्पर्काच्छायारूपत्वमिति वाच्यम् । तस्य तथात्वे तदभेदिनः परस्यापि तथात्वप्रसङ्गात् । व्यावहारिकमेव जीवस्य तमःसम्पृक्तत्वमिति चेदस्तु तर्हि परस्यापि व्यावहारिकमेव । तस्य व्यावहारिकमपि नास्तीति चेन्न । ब्रह्मैवाज्ञानात्संसरतीति व्यवहारदर्शनादित्यलं प्रपञ्चेन ॥

नन्वविद्यात्मकासत्यभेदनिराकरणेन ब्रह्मैक्यप्रतिपादनात्मको जीवसमन्वयोऽस्तीत्यत आह— **सत्य आत्मे**त्यादि । **सत्यं भिदा** सत्यं तयोर्भेद एव नाभेदः । आत्मजीवयोः पृथक्सत्यत्ववचनेनैव स्वरूपभेदस्य सत्यत्वमुक्तम् । पुनः **सत्यं भिदे**ति शपथावृत्तिः दुर्दर्शनप्रतीताभेदनिरासतात्पर्यार्थेति निश्चीयते । **मैवाऽरुवण्य** इति विपक्षे दूषणं चाभीक्ष्णमभिधत्ते श्रुतिः । **आ**समन्तादरशीला आरवः, तैर्वन्यो वननीयो **मैव** भवति परमात्मा । महातमःप्रापकपरमात्माभेदनिर्गुणत्वजगन्मिथ्यात्वादिभावनादोषशीलैर्मायिभिर्नैव भजनीय इत्यर्थः ।

“द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।।

---

1 ‘क’‘ख’—परस्यानुपपन्न—

**यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात् ।
एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥**

---

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ”

इत्यारभ्य—

“तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ” इति भगवद्वचनम् ॥

“असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम् ।
त आसुराः स्वयं नष्टा जगतः क्षयकारिण ” इति व्यासस्मृतिः ॥

“इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।
पराश्रृणीतमचितो न्योषतं हतं नुदेथां निशिशीतमत्रिणः ॥”

“इन्द्रा सोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ।
तपुर्वधेभिरजरेभिरत्रिण” इत्यादिका च श्रुतिः ॥

येषां जगदीश्वरजीवत्रयं नास्ति ते ‘अत्रिणः’ ।

“स्वाज्ञानकल्पितजगत्परमेश्वरत्व—
जीवत्वभेदकलुषीकृतभूमभावे”ति हि मायिनो वदन्ति ॥

“आच्छाद्य विक्षिपति संस्फुरदात्मतत्त्वं
जीवेश्वरत्वजगदाकृतिभिर्मृषैवे”त्यादि च ॥

“त्रिर्यातुधानः प्रसितिं त एत्वृतं योऽग्ने अनृतेन हन्ति ।”
वाचा स्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रसितिं यातुधानः”

“अथ ज्ञानोपसर्गा” इत्यारभ्य “अथ ये चान्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैस्सह न संवसेत् प्रकाश्या ह्येते तस्करा अस्वर्ग्या ” इत्यादिश्रुतिशतैरन्धंतम एव मायिनां गतिरिति निश्चीयते ॥ तथा च स्कान्दे—

“सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः ।
अन्यसाम्यविदो विष्णोर्विष्णुद्वेष्टार एव च ॥

**यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।**
**तेन सत्येन मां देवास्त्रायन्तु सहकेशवा इत्यादेर्नासत्यो भेदः ॥**

**इति गुहाधिकरणम् ॥ ३ ॥**

**आदित्ये विष्णुरित्युक्तम् ।**
**य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मीत्यादावग्नीनामेवादित्यादिस्थत्वमुच्यते ।**
**अतोऽक्ष्यादित्ययोरैक्याद्य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यत्राप्यग्निरेवोच्यते ।**
**अतस्तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति ।**

---

सर्वे यान्ति तमो घोरं न तेषामुत्थितिः क्वचिदि"ति ॥
**यथेश्वरस्य जीवस्येति** पाद्मे । **यथेश्वरश्च जीवश्चे**ति स्कान्दे ॥ ॥ छ ॥

**इति गुहाधिकरणम्**

"यश्चासावादित्ये," "अन्तरादित्ये मनसा चरन्तमि"त्यादा**वादित्ये विष्णुरित्युक्तम्** । **"य एष आदित्ये पुरुषो** दृश्यते **सोऽहमस्मि स एवाहमस्मि"**, "य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि", "य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मी"त्य**ग्नीनां** गार्हपत्यान्वाहार्यपचनावहनीयानामुपकोसलोपदेष्टॄणा**मादित्यादिस्थत्वमुच्यते** । **अतोऽ**क्षीन्द्रियप्रेरका**दित्ययोरैक्यात्** **"य एषोऽन्तरक्षिणि पुरुषो दृश्यत" इत्यत्र** सत्यकामवाक्येऽप्यक्ष्यभिमान्यन्तस्थो**ऽग्निरेवोच्यते । "एवमेवंविदि पापं कर्म न श्लिष्यत" इति** प्रकृताग्निज्ञानफलत्वेन सर्वपापाश्लेषवचना**दग्निज्ञानादेव मोक्षोपपत्तिः** । अतः फलवत्त्वादग्नौ समन्वयो युक्तोऽस्य प्रकरणस्येति पूर्वपक्षाभिप्रायः । अतो यावदत्र ब्रह्मणस्समन्वयो न निर्णीतः, ताव"द्यश्चासावादित्य" इत्यादावप्यतिसुनिर्णयो न स्यात् । अतः सर्वत्रैवेदार्थनिर्णये प्रत्यधिकरणनिर्णयास्सुदृढा भवन्तीति ज्ञापयन्नधिकरणसङ्गतिमदीदिशत् ।

---

१ 'क' 'ख'—ब्रह्मणि

**अतो ब्रवीति—**

**॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥**

**चक्षुरन्तस्थो विष्णुरेव ।**
**त्रिपादस्यामृतं दिवीत्यादिना तस्यैवामृतत्वाद्युपपत्तेर्ब्रह्मशब्दाद्युपपत्तेश्च ॥**
**सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षया ॥**
**अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।**
**सर्वशब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुष्विति कौर्मे ॥**

---

**अन्तर उपपत्तेः** । अन्तरशब्देनान्तस्थो रतिरूपो विवक्ष्यते । तथाचोक्तमाचार्यवर्येणैवानुव्याख्याने—

"अन्तः स्थित्वा रमणकृदन्तरस्समुदाहृतः ।
रमणं चाऽऽत्मशब्देनाऽदेयं मातीति चोच्यत" इति ॥

**चक्षु**रभिमान्य**न्तस्थो विष्णुरेव** । "**त्रिपादस्यामृतं दिवि**" "अमृतैवैषा देवता" "आत्माऽजरोऽमृतोभयो ब्रह्मे"**त्यादिना तस्यैवा**मृतत्वाभयत्वलिङ्गोपपत्तेः । ब्रह्मात्मशब्दोपपत्तेश्च । "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति ह्यत्रोक्तम् ।

"दृश्यते ज्ञानदृष्ट्या यस्सूर्ये चक्षुषि चैकराडि"ति हि मानसे ।

"**सोऽहमस्मि** स एवाहमस्मी"**त्यन्तर्याम्यपेक्षयै**वोच्यते । अत्र चोक्तं छन्दोगोपनिषद्भाष्ये भगवतैव–"स एवाहमस्मी"त्यन्तर्यामिणोस्सर्वविशेषाभावज्ञापनार्थम् । पूर्वं "सोऽहमस्मी"त्यभेदे तात्पर्याधिक्यज्ञापनाय । जीवैक्यपक्ष आदित्ये पुरुषश्चन्द्रमसि विद्युतीति भेदव्यपदेशो न युक्त इति ॥

"यस्सूर्यसोमविद्युत्सु तत्तन्नामा हरिः परः ।
अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ॥" इति च तत्वसंहितायाम् ॥

॥ छ ॥

## ॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥

**सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छतीत्यादिस्थानशक्तिः, भामनिर्वामनिरित्याद्यात्मशक्तिश्चोच्यते ।**
**तस्य ह्येतल्लिङ्गम् ॥**
**स ईशः सोऽसपत्नः स हरिः स परः परोवरियान् यदिदञ्चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स भामनः स वामनः स आनन्दः सोऽच्युत इति हि चतुर्वेदशिखायाम् ॥**
**यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः ।**
**स वामनः परोऽस्माकं गतिरित्येव चिन्तयेति च वामने ॥**

## ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ १५ ॥

**प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ।**
**विज्ञानमानन्दं ब्रह्म ।**
**आनन्दो ब्रह्मेति व्यजानादित्यादेस्तस्यैव तल्लक्षणम् ॥**
**लक्षणं परमानन्दो विष्णोरेव न संशयः ।**
**अव्यक्तादितृणान्तास्तु विप्लुडानन्दभागिन इति ब्रह्मवैवर्ते ॥**
**नच मुख्ये सत्यमुख्यं युज्यते ॥**

---

**स्थानादिव्यपदेशाच्च** । 'वामं' सौन्दर्यं, 'भामं' तेजः, सौन्दर्यतेजःप्रधानत्वात्स्त्रीपुरुषा वामभामशब्दशब्दिताः । तन्नेता **वामनिर्भमानिश्च** । भानाद्वा **भामनिः । यदिदं चक्षुषी**त्यादि श्रुतेरयमर्थः । यस्माद्धरेस्सन्निहितादस्मिंश्चक्षुषि **सर्पिर्वोदकं वा** किञ्चित्सिञ्चति चेत्तद्वर्त्मनी **एव गच्छति स भामनः स वामन** इति ॥ ॥ छ ॥

**सुखविशिष्टाभिधानादेव च** ॥ **कं ब्रह्म खं ब्रह्मे**ति विशिष्टसुखाभिधानादेव केवलं चक्षुरन्तस्थ ईश्वर इत्यवसीयते । **च**काराद्विशिष्टज्ञानाभिधानादेव **च** । **सुखविशिष्टाभिधानादि**ति व्युत्पत्त्यर्थमुक्तम् । अनयोर्हि श्रौतयोः कंखमिति शब्दयोः स्वतः पूर्णसुखज्ञानवाचिनोर्ब्रह्मपदसमानाधिकृतयोः सङ्कोचकारणाभावा–

**॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥**

**स एनान्ब्रह्म गमयतीति ।**
**नह्यन्यविद्ययाऽन्यगतिर्युक्ता ॥**

**॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १७ ॥**

**जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः साम्यादसम्भवाच्च न जीवः ।**
**नियमप्रमाणाभावादनीश्वरापेक्षत्वाच्च ॥**

**॥ इत्यन्तराधिकरणम् ॥ ४ ॥**

**यः पृथिव्यां तिष्ठन्नित्याद्यन्तर्याम्युच्यते ।**
**तत्र चैतदमृतमित्युक्तममृतत्वमुच्यते ।**

---

द्विशिष्टं पूर्णं सुखं ज्ञानं चैवार्थ इत्यभिप्रायेण **नच मुख्यै सत्यमुख्यं युज्यत** इत्याह ॥　　॥ छ ॥

**श्रुतोपनिषत्कगत्यभिधानाच्च** ॥ "**स एनान्ब्रह्म गमयती**"ति 'श्रुतोपनिषत्कानां' श्रुतोपनिषद्गतोपासनानां ब्रह्मगत्यभिधानाच्चान्तरो विष्णुरेव । अस्यामुपनिषण्णं ब्रह्मेत्युपनिषदुपासना, अनया ब्रह्मोपनिषीदतीति वा । ब्रह्मोपासकस्यैव हि ब्रह्मगतिः । तदेतदाह— **नह्यन्यविद्ययेति** ॥　　॥ छ ॥

**अनवस्थितेरसम्भवाच्च नेतरः** ॥ जीवत्वसाम्यादनवस्थितिः । परतन्त्रत्वसाम्यादसम्भवः । नियमप्रमाणाभावोऽनीश्वरापेक्षत्वं चोभावुभयत्रापि हेतू ॥छ॥

**इत्यन्तराधिकरणम्**

"**यः पृथिव्यां तिष्ठन्नि**"**त्यादी**ति प्रथमा सप्तम्यर्थे, तृतीयार्थे वा । **यः पृथिव्यां तिष्ठन्**पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत" **इत्यादिवाक्येष्वन्तर्याम्युच्यते** । **तत्र**

**स च यस्य पृथिवी शरीरमित्यादिना सर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवो वा युक्तः।**
**नहि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—**

**॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ॥ १८॥**

**यं पृथिवी न वेद पृथिव्या अन्तर इत्यादिनाऽधिदैवादिषु तद्धर्मव्यपदेशाद्विष्णुरेवान्तर्यामी।**
**स हि, न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप, स योऽतोऽश्रुतः, सर्वेषां भूतानामन्तरपुरुष इत्यादिनाऽविदितोऽन्तरश्च॥**

**॥ ॐ नच स्मार्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥**

**त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामि ॥**

---

**च** वाक्येषु तस्मिन्नन्तर्यामिण्येतद**मृतम**भयमित्यक्षिपुरुषस्योक्त**ममृतत्वं** "एष त आत्माऽन्तर्याम्यमृत" **इत्युच्यते । स च यस्य पृथिवी शरीरमित्यादिना सर्वात्मकत्वात्प्रकृति**रित्यादेरयमर्थः । **स चा**न्तर्यामी जडप्रकृति**र्यु**ज्यते । **यस्य पृथिवी शरीर**मिति शरीरशब्दस्य स्वरूपवाचकत्वात् । सर्वोपादानत्वेन **सर्वात्मकत्वा**च्च तस्याः । चित्**प्रकृति**र्वा, सर्वाभिमानेन सर्वशरीरत्वात् । सर्वादानेन सर्वव्याप्त्या च **सर्वात्मकत्वा**च्च तस्याः । **तत्त**दभिमानी **जीवो वा । नहि विष्णोः** पृथिव्यादिरूपत्वं तदभिमानित्वं वाऽस्ति, येन तच्छरीरत्वमुच्येतेत्यत आह— **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॥ **विष्णुरेवान्तर्यामी**, अधिदैवाधिभूताध्यात्मप्रकरणेष्वन्तर्यामिणोऽविदितत्वान्तरत्वादिविष्णु**धर्मव्यपदेशात्** । "यः पृथिव्यां तिष्ठन्नि"त्याद्यधिदवम् । "यस्सर्वेषु भूतेषु तिष्ठन्नि"त्याद्यधिभूतम् । "यः प्राणेषु तिष्ठन्नि"त्याद्यध्यात्मम् ॥ ॥ छ ॥

**नच स्मार्तमतद्धर्माभिलापात्** ॥ **त्रिगुणत्व**जडत्वाद्यभिलापाभावान्न **प्रधानम**त्रोक्तम् । कपिलस्मरणमात्रपरिकल्पितं न श्रुतियुक्त्युपेतमिति **स्मृत्युक्त**मित्युक्तम् । आत्मत्वामृतत्वादृष्टत्वद्रष्टृत्वाद्य**तद्धर्माभिलापा**च्च ॥ ॥ छ ॥

**॥ ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ २० ॥**

**य आत्मनि तिष्ठन्नात्मनोऽन्तरः, यो विज्ञाने तिष्ठन्नित्युभयेऽपि शाखिनो भेदेन जीवमधीयते ।**
**शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।**
**रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगदिति वचनान्न शरीरत्व-विरोधः ॥**

**॥ इत्यन्तर्याम्यधिकरणम् ॥ ५ ॥**

**अदृश्यत्वादिगुणा विष्णोरुक्ताः ।**
**यत्तदद्रेश्यमग्राह्यमित्युक्त्वा तस्माच्चाक्षरात्परतः पर इति परः प्रतीयत इत्यतो ब्रवीति—**

**॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ २१ ॥**

---

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते** ॥ अतद्धर्माभिलापादेव तत्तज्जीवाशङ्कायां निरस्तायां योगिजीवमन्तर्यामिणमाशङ्क्यमानं विशेषयुक्त्या निराकरोति । **उभयेऽपि** हि **शाखिनो** माध्यन्दिनाः काण्वाश्चाविशेषितं **जीवमन्तर्यामिणो भेदेनाधीयत** इति । **चकारात्** "यस्तेजसि तिष्ठन्" "यस्तमसि तिष्ठन्नि"-त्यादि श्रीदुर्गारूपायाश्चित्प्रकृतेश्च भेदेनाधीतत्वान्न चित्प्रकृतिरन्तर्यामिणीत्यभिप्रायः ॥

**इत्यन्तर्याम्यधिकरणम्**

**अदृश्यत्वादिगुणा** इत्यादेरयमर्थः । "अदृश्येऽनात्म्ये" "सहैव सन्त न विजानन्ति देवाः" "स योऽतोऽश्रुत" इत्यादिनाऽ**दृश्यत्वादिगुणा विष्णोरुक्ताः** । श्रुत्यन्तरे तु "अथ परा यया तदक्षरमधिगम्यते, **यत्तदद्रेश्यमग्राह्यम**गोत्रमि"त्याद्यु-**क्त्वा** उत्तरत्र **अक्षरात्परतः पर** इति वचनात् **तस्माद**दृश्यत्वादिगुणकादक्षरात्परतः **परः** कश्चिदस्तीति **प्रतीयत** इति । अनेन भाष्येणाधिकरणसङ्गतिरगादि । विषयवाक्यं चोदाहारि । संशयस्थानं चोद्भावि । पूर्वपक्षबीजं चासूचि ।

---

१ 'ग'—न्तर्यामी–

**पृथिव्यादिदृष्टान्तमुक्त्वा, अक्षरात्सम्भवतीह विश्वमित्यतः परं तत्परतःपराभिधानात्, कूटस्थोऽक्षर उच्यत इति स्मृतेश्च प्रकृतेः प्राप्तिः । ब्रह्मशब्दात्तत्परतःपराभिधानादेव च हिरण्यगर्भस्य ।**
**तमेवं विद्वानमृत इह भवति ।**
**तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।**
**अथ द्वे वाव विद्ये वेदितव्ये परा चापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परात्मेत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥**

**॥ ॐ विशेषणभेदव्यपदेशाभ्याश्च नेतरौ ॐ ॥ २२ ॥**

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति विशेषणान्न प्रकृतिः ।**

---

**अदृश्यत्वादिगुणको धर्मोक्तेः** ॥ तमेव पूर्वपक्षं सहेतुकमिह वर्णयति । "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि **तथाऽक्षरात्सम्भवतीह विश्वमि**"त्यूर्णनाभिपृथिव्यादिदृष्टान्तेनाक्षरस्य जगदुपादानत्वमुक्त्वोपरि तस्माच्चाक्षरात्परतःपरस्या**भिधाना**ज्जडप्रकृतिरदृश्यत्वादिगुणकमक्षरमिति पूर्वपक्षः ॥ **'कूटस्थोऽक्षर उच्यत' इति स्मृते**श्चित्प्रकृतिर्वा । "ब्रह्मा देवानां प्रथमस्सम्बभूव" "विश्वस्य कर्ता भुवनस्य गोप्ता" "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामि"त्यादि **ब्रह्मशब्दात्**, तस्मात्परस्याः प्रकृतेः परस्य **हरेरभिधानादेव च** हिरण्यगर्भो वेति । **तमेवं विद्वानि**त्यादिना परिहरति । विष्णुधर्मत्वेन स्पष्टं श्रुत्यन्तरसिद्धं परविद्याविषयत्वब्रह्मत्वामृतत्वादि, तदत्राप्युच्यते, "अथ परा" "तदेतदक्षरं ब्रह्म" "पुरुष एवेदं विश्वं" "कर्म तपो ब्रह्म परामृतमि"त्यादिना । **अतोऽदृश्यत्वादिगुणको विष्णुरेव** । आयुर्वेदो धनुर्वेदो गान्धर्वं स्थापत्यं **चोपाङ्गानि** । शिष्टाः कला विद्याः **प्रत्यङ्गानि** ॥ ॥ छ ॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ सर्वत्र विद्यत इति **सर्ववित्** । विद सत्तायामिति धातोः । **यस्य ज्ञानमय**मालोचनं न संशयात्मकम् ॥ ॥ छ ॥

**तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इति भेदव्यपदेशान्न विरिञ्चः ।**
**अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।**
**श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥**
**तामक्षरं परं प्राहुः परतःपरमक्षरम् ।**
**हरिमेवाखिलगुणमक्षरत्रयमीरितमिति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्येति भेदव्यपदेशादीशशब्दप्राप्तोऽपि न रुद्रः ॥**

## ॥ ॐ रूपोपन्यासाच्च ॐ ॥ २३ ॥

**यदा पश्यः पश्यते रुक्मवर्णमिति ॥**
**एको नारायण आसीन्न ब्रह्मा नच शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति । स एतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणि व्यमिश्रयत् । अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयन्ते ॥**

**॥ इत्यदृश्यत्वाधिकरणम् ॥ ६ ॥**

**अदृश्यत्वादिगुणेषु सर्वगतत्वं यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त इति वैश्वानरस्योक्तमित्यत आह—**

---

**रूपोपन्यासाच्च ॥ पश्यो** जीवः । **स** मौनी **भूत्वा** सृजानीति **समचिन्तयत् । विश्वो** वायुः । **एतानि** विमिश्राणि कृत्वा तेभ्यो **ह्यचीक्लृपत् ।** तानि **विमिश्राणि** पुनरपि **व्यमिश्रयत् ॥** ॥ छ ॥

**इत्यदृश्यत्वाधिकरणम्**

एवं तावच्छ्रुतिलिङ्गानामन्यत्रप्रसिद्धानां ब्रह्मणि समन्वयं प्रदर्शयता पादद्वयार्थनिगमनाय सर्वनाम्नां सर्वलिङ्गानां च समन्वयदृढीकरणात्मकोऽखिलगुणोदीरणपरतया गुणविरहवादनिराकरणाकृतिः[1] परमकारुणिकेनामरगणगुरुणाऽयमधि-

---

[1] 'क' 'ख'—गुणविरहवादिनिराकरणाकाराकृतिः

## ॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४ ॥

**अग्नाविष्ण्वोः साधारणवैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥**

## ॥ ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ २५ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम् ।**
**समाख्यानात् ।**
**इतिशब्दः समाख्याप्रदर्शकः ॥**

## ॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ २६ ॥

**अयमग्निर्वैश्वानरः ।**

---

करणराज आरभ्यते । "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्ममि"ति मुण्डकश्रुता**वदृश्यत्वादिगुणेषु सर्वगतत्वमु**क्तम् । तदत्र च्छन्दोगश्रुतावभिविमानशब्देनोच्यते । अभितो विगतं मानमस्येति 'अभिविमानः' । **वैश्वानरः साधारणशब्दविशेषात्** ॥ पूर्वत्रान्यत्रप्रसिद्धिमात्रप्रतिषेधाज्ज्वलनजनार्दनयोः साधरणस्य वैश्वानरशब्दस्य विष्णावेव प्रवृत्तिदर्शनेनोभयत्रप्रसिद्धोभयविधपदकदम्बकसमन्वयोपन्यासावसरसूचनामाचरत्य**ग्नाविष्ण्वो**रित्यादिना । प्रादेशमात्रत्वमधिकार्यपेक्षया । "प्रादेशमात्रं पुरुषं वसन्तमि"ति च भागवते ॥ ॥ छ ॥

**स्मर्यमाणमनुमानं स्यादिति** ॥ **अहं वैश्वानरो भूत्वे**त्यत्र वैश्वानर इति विष्णुविषयतयैव निर्णीतं स्मर्यमाणमनेन सन्दिह्यमानेन वैश्वानरशब्देन समभाख्यान**मत्रापि स एवोच्यत इत्यस्या**र्थस्या**नुमापकम्** ॥ ॥ छ ॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते** ॥ **अयमग्निर्वैश्वानरो** योऽयमन्तः पुरुष" इति वाजसनेयके । वैश्वानरस्याग्नित्वे श्रुतिः प्रमाणम् । "मूर्धानं दिवो अरतिं पृथिव्या

**वैश्वानरमृत आजातमग्निमित्यादिः शब्दः ।**
**वैश्वानरे तद्धुतं भवति ।**
**हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय इत्याद्यग्निलिङ्गमादिशब्दोक्तम् ।**
**येनेदमन्नं पच्यते ।**
**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमित्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते ।**
**तस्मान्न विष्णुरिति चेन्न ।**
**अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति । स य एतमेवमात्मानं विश्वं हरिमाराद्रमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवतीति तत्तन्नामलिङ्गादिना तस्यैव ह्यभ्युपदेशान्महोपनिषदि ॥**

---

**वैश्वानरमि**"त्यादेरयमर्थः[१] । 'दिवो मूर्धानं' मूर्धन्वन्तं विष्णोरङ्गाङ्ग्यभेदात् । 'पृथिव्या' अरतिमन्तं, अरं तरति[२] येन सोऽरतिः पाद इत्यर्थः । विश्वनरस्थम् । **ऋते** वेदे **आ** समन्ताद्व्यक्तमङ्गनेतारं[३] सम्यग्राजन्तं सर्वानतिशय्य स्थितं पातारं जनानामास्य 'आ' समन्ताद्व्यञ्जयाञ्चक्रुरग्न्यादिदेवाः । **वैश्वानरे तद्धुतं भवती**त्यादि च श्रुत्यन्तरे हुतस्थानत्वमग्निलिङ्गम् । **हृदयं गार्हपत्य** इत्यादौ हृदयस्थो गार्हपत्यपदवाच्य इत्याद्यवगन्तव्यम् । "**येनेदमन्नं पच्यते** यदिदमद्यत" इति वाजसनेयके । **पाचकत्वेनान्तः प्रतिष्ठानं** प्रधानलिङ्गत्वेनाभिमतत्वात्पृथगुक्तम् । **सर्वकर्मा** "न ऋते त्वत्क्रियते" इत्यादेः । वज्रधरत्वादीनि सर्वाणि लिङ्गानि चास्यैवेति **सर्वलिङ्ग** एषः । तदिच्छयैव सर्वमिति **सर्वकामः** । गुणा ज्ञानानन्दादयः । धर्माः सर्वज्ञत्वादयः । भेदसंयोगविभागादिधर्मास्तदधीना इति वा 'सर्वधर्मा' । सर्वत्र रूपमस्येति **सर्वरूपः** । सर्वमस्य रूपं प्रतिमेति वा[४] । **विश्वं** पूर्णं, **आराद**न्तिके, **अरं** सम्यक् ॥

---

१ "कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः" इत्युत्तरार्धम् ।
२ 'ग'—अरं तरति येन ३ 'क''ख'—मगनेतारं
४ 'ग'—वा सर्वरूपः ।

**अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः ।**
**अब्रह्माणः परे सर्वे ब्रह्माऽऽत्मा विष्णुरेव हीत्यादिना को न आत्मा किं ब्रह्मेत्यारम्भाच्चान्येषामसम्भवाद्विष्णुरेव वैश्वानरः ॥**
**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायतेत्यादिना यः पुरुषाख्यो विष्णुरभिहितः तद्विधमेवात्र मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मेत्यादिनैनं वैश्वानरमधीयते ॥**
**चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति॥**
**तथाच ब्राह्मे—**
**यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।**
**तथैव मे मनो नित्यं भूयाद्विष्णुपरायणमिति ॥**
**चतुर्वेदशिखायां च —**
**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष ह्यवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूप इति ।**

---

**अनात्तत्वादनात्मान** इत्यादिनाऽसम्भवादिति सूत्रावयवं व्याचष्टे । **को न आत्मा किं ब्रह्मेति** मीमांसमानैर्महाशालैर्महामुनिभिरुद्दालकोद्दिष्टैस्तद्युक्तैः परिपृष्टो राजाऽश्वपतिर्वैश्वानरमुपदिदेश ॥ नच विष्णोरन्येषामात्मत्वं ब्रह्मत्वं च सम्भवति । **अनात्तत्वा**दित्यादिवचनात् । तस्मा**द्विष्णुरेव वैश्वानरः**। "तस्य ह वा एतस्य आत्मनो वैश्वानरस्य **मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्म** सन्दोहो[1] वहुलो वस्तिरेव रैः पृथिव्येव पादावि"त्यादेरर्थस्तु—

"क्रीडात्मकत्वाद्द्यौश्चैव सुतेजाश्चातितेजसा[2] ।
स्वर्गाधारं शिरो विष्णोः सर्वरूपातिदर्शनात् ॥
चक्षुस्तु विश्वरूपाख्यमादानादायुषामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ॥
वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरिर्यतः ।

---

१ 'ख'—सन्देहो
२ 'क' 'ख'—तेजसः

**बृहत्संहितायां च—**
**यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ॥**
**न तथा सर्ववेदाश्च वेदाङ्गानि च नारदेति ।**
**यस्माद्यज्जायते चाङ्गाल्लोकदेवादिकं हरेः ।**
**तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखमिति नारदीयवचनान्नाभेदोक्तिविरोधः ॥**

**॥ ॐ अत एव न देवता भूतं च ॐ ॥ २७ ॥**

**अग्निवैश्वानरादिशब्दस्तेजसि भूतेऽग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥**

---

प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः ॥
वायोरप्याश्रयो नित्यं बहुत्वाद्बहुलः स्मृतः ।
आकाशनामा त्वादीप्तेः[1] मध्यदेहो रमापतेः ॥
व्याप्तत्वादाप इत्युक्तो रै रतिकरत्वतः ।
वस्तिराकाशवाय्वोश्च तावाधारौ प्रकीर्तितौ ॥
प्रथनात्पृथिवीनामा प्रतिष्ठा च प्रतिष्ठितेः ।

पादौ भगवतो विष्णोः पृथिव्याश्रय एव चे"त्याद्यायां वैश्वानरविद्यायां विभिद्य निवेद्यते । **यस्मादङ्गाद्यज्जायते** यदाश्रित्य तिष्ठति च यत्र लीयते च **तद्धरेरङ्गं तन्नामवाच्यम् । यथा** "ब्राह्मणोऽस्य मुखमासीदि"त्यादौ ब्राह्मणादिजनकानि[2] हरेर्मुखादीनि ब्राह्मणादिनामान्युच्यन्त एवमितरत्रापीति । अतो **न** भगवदङ्गेभ्यस्त्रिदिवदिनकरादीनां भिन्नानां **तदभेदोक्ति**निमित्तो **विरोध** आशङ्कनीयः । उक्तभङ्ग्या तदभावात् ॥ ॥ छ ॥

**अत एव न देवता भूतं च ॥ प्रसिद्धोऽपि** यद्यपि प्रसिद्धस्तथाऽपीत्यर्थः ॥ ॥ छ ॥

---

१ 'ग'—चाऽदीप्तेः
२ 'ग'—जातिजनकानि

**॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥**

**नाग्न्यादयः शब्दा अग्न्यादिवाचकाः ।**
**तथाऽपि साक्षादेवानन्ययोगेन ब्रह्मवाचकैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ॥**
**व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।**
**अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवदिति स्कान्दवचनान्न मतानां परस्परविरोधः ॥**

**॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥**

**तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥**

**॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥**

**तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः॥**

---

सर्वशब्दानां ब्रह्मवाचकत्वे किमर्थमन्यत्र व्यवहरन्तीत्यत आह—**साक्षादप्यविरोधं जैमिनिः । नाग्नि**रिन्द्र इत्यादिशब्दा **अग्न्यादि**मुख्य**वाचकाः** । किन्तु ब्रह्मण एव । **तथाऽपि साक्षादेवा**न्यत्रयोगाभावेन ब्रह्मणि सम्यग्योगेन **ब्रह्मवाचकै**रपि तैर्विद्वांसो हानादि**व्यवहारार्थमन्यत्रा**ग्न्यादौ **व्यवहरन्ति**, अविद्वांसस्त्व**नभिज्ञानाद्व्यवहारार्थं चेत्यभ्युपगमे** विरोधाभावं **जैमिनिर्वक्ति** ॥ छ ॥

तर्हि कथमग्निसूक्तमिदमिदं वायुसूक्तमिति नियम इत्यत आह—**अभिव्यक्तेरित्याश्मरथ्यः ॥ तत्र** तत्र सूक्ते ब्रह्मण एव वाच्यत्वेन **प्रसिद्धावप्यग्न्या**दिसूक्तोपासकना**मग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥** ॥ छ ॥

**अनुस्मृतेर्बादरिः ॥ तत्र त**त्राग्न्यादिसूक्ते**षूक्तस्य विष्णोरग्न्यादिषु** तत्तदन्तर्यामितयाऽ**नुस्मर्यमाणत्वा**त्सूक्त**नियम इति बादरिः** बादरात्मजः [1]शुक इत्यर्थः ॥ ॥ छ ॥

---

१ 'क''ख'—बादरायणात्मजः

**॥ ॐ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॐ ॥ ३१ ॥**

**साक्षादप्यविरोधं वदञ्जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते। तं यथा यथोपासते तदेव भवतीति हि दर्शयति ॥**

**नह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—**

**॥ ॐ आमनन्ति चैनमस्मिन् ॐ ॥ ३२ ॥**

**एनं विष्णुमस्मिन्नग्न्यादावामनन्ति ।**
**योऽग्नौ तिष्ठन्नग्नेरन्तरः ।**
**य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष इत्यादिना॥**

**॥ इति वैश्वानराधिकरणम् ॥ ७ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥**

---

**सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ साक्षा**त्परममुख्यतया ब्रह्मवाचकत्वेऽपीतरत्र व्यवहारे प्रयोजनं तत्र व्यवहाराभावे केषाञ्चिद्द्वतुं च **वदन् जैमिनिस्सूक्त**मन्त्रा**दिनियम**मग्न्यादिसूक्तादिभिर्भगवदुपासकाना**मग्न्यादिसम्प्राप्त्या मन्यते । तदेव भवति** तथैव भवति, यत्प्रकारेणोपास्ते तत्प्रकारेण भवति । अतोऽन्यादावुपासकोऽन्यादौ सम्पद्यते ॥ ॥ छ ॥

तामेव भगवतस्तत्र तत्र स्थितिं स्पष्टयत्यतिशङ्कां परिहरन्—**आमनन्ति चैनमस्मिन्** ॥ नैकत्रैवामनन्ति वाजसनेयिनः । **च**कारादन्यत्र च "यश्चायमस्मिन्नि"त्यादौ । अन्ये चा**ऽमनन्ति** "य एष एतस्मिन्नि"त्यादौ । अन्ये चा**ऽमनन्ति** "एतमस्यामेतं दिवी"त्यादि । अन्ये च "तत्सृष्ट्वा तदेवानुप्राविशदि"त्यादि । स्मरन्ति च "यच्चन्द्रमसि यच्चाग्नावि"त्यादि ॥ ॥ छ ॥

**इति वैश्वानराधिकरणम्**

**॥ इति तत्वदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥**

॥ श्रीः ॥



## ॥ तृतीयः पादः ॥

**तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयमस्मिन्पादे दर्शयति।**
**विष्णोः परविद्याविषयत्वमुक्तम्।**
**तत्र यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमित्यत्र प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः, प्राणेश्वरः कृत्तिवासाः पिनाकीत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः स एषोऽन्तश्चरते बहुधा जायमान इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते—**

**॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥**

---

अथोभयत्र **प्रसिद्धानां** नामलिङ्गात्मकानां **शब्दानां** समन्वयः कथ्यते। "अथ परा यया तदक्षरमधिगम्यत" इत्यादिना विष्णोः **परविद्याविषयत्व मुक्तम्। तत्र** परविद्याविषये, तस्यामेव श्रुतौ **यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमित्यत्र** द्युभ्वाद्यायतनवाक्यैश्श्रूयमाणं प्राणाधारत्वं श्रुत्यन्तरे **रुद्रस्य** प्रतीयत इत्यन्वयः ॥ अयमभिसन्धिः—विष्णोः परविद्याविषयत्वमुक्तम्। तच्च परविद्याविषयत्वं द्युभ्वाद्यायतनस्योच्यते **तमेवैकं जानथ आत्मानमित्यत्र**। अनन्ययोगेन प्रधानज्ञेयत्वं ह्यत्रोच्यते। तदेव च परविद्याविषयत्वम्। तस्य च द्युभ्वाद्यायतनस्य प्राणाधारत्वं श्रूयते

**तमेवैकं जानथ आत्मानमित्यात्मशब्दात् द्युभ्वाद्यायतनं विष्णुरेव ॥**
**आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।**
**न सम्भवन्ति यस्मात्तैर्नैवाऽत्ता गुणपूर्णतेति हि ब्रह्मवैवर्ते ॥**

---

**ओतं मनस्सह प्राणैश्च सर्वै**रिति । तच्च प्राणाधारत्वं श्रुत्यन्तरे **रुद्रस्य** प्रतीयते, **प्राणानां ग्रन्थिरसी**त्यादौ, **प्राणेश्वर** इत्यादौ च । अस्यामेवोपरि जीवलिङ्गं च । वायोश्च तत्र तत्र प्रसिद्धं प्राणाधारत्वम् । तत्र संशयः । किमिदं द्युभ्वाद्यायतनं रुद्रस्स्यादुत जीवमात्रमाहोस्विद्वायुरुत विष्णुरेवेति । **द्युभ्वाद्यायतन**मिति सूत्र-भाष्ये एव सन्देहपदमावेदयतः । अस्यैव हि विष्णुत्वं सिद्धान्ततः सूत्र्यते भाष्यते च । यस्य च यथात्वं सिद्धान्तयतिं तस्य तदन्यथात्वं पूर्वपक्षयतीति श्लिष्टम् । पूर्वपक्षसिद्धान्तनिर्णयधर्मधर्मिण एव च संशयाधिकरणत्वम् । तावेव च धर्मौ सर्वत्र संशयकोटितामाटीकेते । अयमतिप्रसिद्धो न्यायस्सर्वत्रानुसारयितव्यो यद्याद्रियन्ते विद्वांसः । न पुनरतिगहनार्थत्वावगाहसन्नाहिनो महदनुसेविनः प्रत्यधिकरणं प्रक्रियाप्रकथनरूपां बहिर्मुखसुखावहामनल्पजल्पमालामाद्रियेरन् । नहि मणिग-णमार्गणपरा निपुणधियोऽनुपदं स्वपरगुप्तिपाटनपटवोऽधिजलधि लहरीपटलपरि-वृत्तिपरिगणनकौतुकेन समयमतिपातयन्ति ।। ननु संशयनिर्णयप्रयोजनादीनामन-धिगतौ केयमधिकरणपरिभाषा । किमत्रानधिगतम् ? पूर्वोत्तरपक्षयुक्तिकथनात्मके विचारे विशेषयुक्त्या सिद्धान्तावधारणात्मको निर्णयस्तत्र तत्र प्रसिद्धः । प्रयोजनं च तत्तत्समन्वयसिद्धिस्समन्वयाध्याये । एवमुत्तरत्रापीति दिङ्मात्रमत्र प्रदर्शितम् ॥

अनयैव दिशा विषयादयस्तत्र तत्र विशेषतो गवेषणीयाः । प्रक्रिया च त्रिचतुरेषु स्थानेषु व्याक्रियमाणा किमिति मतिं नारोहेत् । तदेवं विचार्यमाणे द्युभ्वाद्यायतनं रुद्र इति प्राप्तं, जीव इति वा, उक्तयुक्तेरेव । वायुरिति च पक्षा-न्तरम् । "प्राणभृच्चे"ति सौत्राच्चकारान्न **जीवो वायुश्चे**ति सिद्धान्तभाष्ये प्रति-षेत्स्यमानत्वाच्च । वायोः प्राप्तौ तु प्राणाधारत्वं हेतुरिति प्रसिद्धत्वादनुक्तिः । अत आह—**द्युभ्वाद्यायतनं स्वशब्दात्** ॥ **द्युभ्वाद्यायतनं विष्णुरेव, आत्मशब्दात्** । विष्णोस्स्वरूपस्यैव साक्षाद्वाचको ह्ययमात्मशब्दः ॥ ॥ छ ॥

## ॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

**अमृतस्यैष सेतुरिति ॥**
**ब्रह्मविदाप्नोति परम् ।**
**नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।**
**मुक्तानां परमा गतिः ।**
**एतमानन्दमयमात्मानमुपसंक्रामतीत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ॥**
**बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णय इत्यादित्यपुराणे ॥**

## ॥ ॐ नाऽनुमानमतच्छब्दात् ॐ ॥ ३ ॥

**नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः ।**
**भस्मधरोग्रत्वादितच्छब्दाभावात् ॥**
**सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परःपरोवरीयानित्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् ॥**

---

**मुक्तोपसृप्यव्यपदेशात्** ॥ **अमृतस्यैष सेतुरिति** मुक्तस्याऽश्रयत्वेनोपसृप्यत्वव्यपदेशाच्च विष्णुरेवात्रोच्यते । **परायणं** पराणां मुक्तानामयनम् ॥ ॥ छ ॥

**नाऽनुमानमतच्छब्दात्** ॥ **'आनुमानं'** अनुमानात्मकागमपरिकल्पितं रुद्राख्यं ब्रह्मात्र न वाच्यम् । शैवागमे क्वचिदुक्तसाधनानुष्ठानेन यथोक्तदृष्टफलोदयोपलम्भात्तदृष्टान्तेनेशवाक्यत्वहेतुनाऽन्यत्रापि प्रामाण्यमनुमीयते । एवमनुमानादाप्तप्रामाण्यस्तदागमः 'अनुमानात्मक' उच्यते । नच तेन प्रामाण्यं साधयितुं शक्यते । तेनैव यथोक्त[1]दृष्टफलव्यभिचारिणा वाक्यान्तरेण कृत्स्नस्याप्यप्रामाण्यसाधनसौकर्यात् । अत एव **परिकल्पितरुद्र** इति समगिरत भगवान् । विस्पष्टमाचष्ट चानुव्याख्याने "तद्वद्व्यभिचारिणा । अप्रामाण्यानुमा च स्यादि"ति । स्वयं च भगवत्तमः पशुपतेरसामञ्जस्यमसर्वज्ञत्वादिकं च सूत्रयिष्यति । **परःपरो वरीयान्** परा वाग्देवी, परतः परो विरिञ्चः, ततोऽपि वरा प्रकृतिः, वरीयान्

---

१ 'ग'—तद्वतेनैव यथोदित-

ब्रह्माण्डे च—
रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।
ईशनादेव चेशानो महादेवो महत्त्वतः ॥
पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः श्रुतः ॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।
कृत्यात्मकमिमं देहं यतो वस्ते प्रवर्तयन् ॥
कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते ॥
एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तम इति ॥
वामने च—
नतु नारायणादिनां नाम्नामन्यत्र सम्भवः ।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित इति ॥
स्कान्दे च—
ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान्राजेवर्तें स्वकं पुरमिति ॥
चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
विशेषनामानि ददौ स्वकीयान्यपि केशव इति च ब्राह्मे ॥

## ॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥

एतैरेव हेतुभिर्न जीवो वायुश्च ॥
अजायमानो बहुधा विजायत इति तस्यैव बहुधा जन्मोक्तेः ॥

---

विष्णुः ॥ अत्र तरबीयसुनौ तमबिष्ठनर्थौ । "यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमावि"ति च शब्दनिर्णये । **शर्वश्शंरोधनाद्धरिः** मुक्तिपर्यन्तं स्वरूपभूतमपि शं रुद्ध्वा वर्तते हि ॥　　　　॥ छ ॥

**प्राणभृच्च** ॥अनन्यसाधरणतया ब्रह्मणस्स्वस्यैव वाचकादात्मशब्दान्मुक्तोपसृप्यव्यपदेशाज्जीववाचकशब्दाभावाच्च न जीवो द्युभ्वाद्यायतनमित्यभिहितम् ।

## ॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥

**नचैक्यं वाच्यम् ।**
**अन्यमीशमस्येति भेदव्यपदेशात् ॥**

## ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

**द्वे विद्ये वेदितव्ये इति तस्यैव ह्येतत्प्रकरणम् ॥**

## ॥ ॐ स्थित्यदनाभ्यां च ॐ ॥ ७ ॥

---

तथाऽप्यनाद्यविद्यानिबन्धनभ्रमाभिनिवेशपरवशहृदयतया परमपुरुषशारीरयोरभेदमेव तत्वं मन्वानास्तदभेदेन शारीरस्य द्युभ्वाद्यायतनत्वमिति शङ्कन्ते । तदपाकरोति । **भेदव्यपदेशात् ॥ नचैक्यं वाच्यम्** । अयमर्थः । यदिदं जीवपरयोरैक्यमभिधीयते तत्सत्यं मिथ्या वा? सत्यं चेन्न **वाच्यम्** । सत्यस्यावाच्यत्वात् । **नच** लक्ष्यमिति **वाच्यम्** । वाच्यस्यैव लक्ष्यत्वात् । अथ न तथा, तथाऽपि **न वाच्यम्** । **न**ह्यविद्यमानमस्तीति **वाच्यम**भ्रान्तानाम् । अथ मिथ्याशब्दोऽनिर्वाच्यवाचीति मन्वीथाः, तथाऽपि **नैक्यं** श्रौतमिति **वाच्यम्** । अनिर्वाच्यत्वादेव । नह्यनिर्वाच्यं श्रुतिप्रतिपाद्यं तत्पक्षेऽपि । ऐक्यस्य मिथ्यात्वे भेदस्यैव सत्यत्वात्तस्य च श्रुतौ व्यपदेशाच्च "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्य**न्यमीशमस्य** महिमानमिति वीतशोक" इति । समाने शरीरे निकृष्टत्वेन स्थितो जीवोऽनीशतया भेदे मुह्यमानः शोचति । जुष्टं देवैः अस्य जीवस्येशमन्यं यदा पश्यति महिमानं महिमगुणात्मकं तदा तथैव वीतशोको भवति ॥ न दुःखलेशमपि स्पृशति । नतु महिमगुणविहीनमनन्यमनीशसेवितं पश्यन्वीतशोको भवतीति सतात्पर्यं भेदव्यपदेशाद्भिन्न एव प्राणभृत्परमात्मनः ॥ ॥ छ ॥

**प्रकरणात् ॥ द्वे विद्ये वेदितव्ये** इत्यारभ्य "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा" इति जीवेशभेदस्य **ह्येतत्प्रकरणम्** । अदृश्यत्वापाणिपादत्वसर्वगतत्वभूतकारणत्वादिधर्मैर्जीवाद्भिन्नो हीशोऽत्र प्रकृतः ॥ ॥ छ ॥

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः　पिप्पलं　स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीतीशजीवयोः स्थित्यदनोक्तेः ॥**

**इति द्युभ्वाद्यधिकरणम् ॥ १ ॥**

---

**स्थित्यदनाभ्यां च** ॥ ईशस्यानश्नतः स्थित्युक्तेर्जीवस्य　कर्मफलादनोक्तेश्च न तयोरैक्यं वाच्यम् ।

"सुपर्णावितौ सयुजौ सखायौ यदृच्छया कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥
आत्मानमन्यं च स वेद विद्वानपिप्पलादो नतु पिप्पलादः ।
योऽविद्ययाऽन्धस्स तु नित्यबद्धो　विद्यामयो यस्स तु नित्यमुक्तः ॥" इति च भागवते ।

"अनत्तृत्वं हरेर्दुःखानत्तृत्वादुच्यते सदा ।
विषयान्विनाऽपि पूर्णत्वात्स्वरूपानन्दभोगिनः ॥
शुभमत्त्येव हि सदा सर्वत्रावस्थितं विभुः ।
स्वादोरदनवद्भयत्ति जीवोऽस्वाद्वपि यत्सदा ।
अनारतं पारवश्यात्स्वाद्वत्तीति ततः श्रुत" इति　भोगनिर्णये ॥
"अस्वादु स्वादुवद्भयत्ति जीवो नैव जनार्दनः ।
अतो नास्तीति वचनमश्नतोऽपि शुभं सदे"ति परमभोगे ॥
"साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्ति विनाऽप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुज" इति स्वाभाव्ये ॥
"सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा ।
पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः ॥
स्ववशेनादनाद्विष्णुर्नात्तीत्यत्ताऽपि संश्रुतः ।
स एव हि शुभस्यात्ता　जीवोऽत्त्यस्यैव　वेदनात् ॥" इति कूर्मसंहितायाम् ।

भेदवाक्यमतत्त्वावेदकमिति चेत्तदयुक्तम। अतत्त्वावेदकं चेन्न प्रमाणम्। प्रमाणं चेन्नातत्त्वावेदकम्। अतत्त्वावेदकत्वाद्धि रजतभ्रान्तिरमानमित्युच्यते। तदापाततो बाध्यते, अस्य तु देशकालादिभिस्सहैव बाधः, अत एतत्प्रमाणमिति चेन्न। गगनतलमलिनतादिज्ञाने व्यभिचारात्। देशकालादीनां बाधश्च नैव भावी, नित्यत्वात्तेषाम्। अन्यथा कुत्र कदा कस्येति पृष्टे किमुत्तरं स्यात्। चेतनस्य स्वात्मनि सर्वगते ज्ञानोत्तरकालमविद्या सविलासा निवर्तते, नच तदा क्वापि किञ्चिदनिवृत्तमस्तीति चेदेवं तर्हि देशकालादीनां न बाधोऽभ्युपगतः। बाधावधित्वाद्यभ्युपगमात्। नच निरवधिको बाधो युक्तः। तस्मादतत्त्वावेदकप्रमाणवचनवत्तल्लक्षणवाक्यमपि स्वव्याहतम्। अपिचैवंवादिना वादिना कृत्स्नोऽप्यतत्त्वावेदको वेदो ह्यवादि। नहि वेदैकदेशेऽप्यभेदवादं वदन्ति कोविदाः। तदहो महानेष संरम्भो वेदप्रमाण्ये प्रच्छन्नशून्यवादिनः। अस्ति तत्त्वमस्यादिवाक्यं तत्त्वावेदकमिति चेन्न। मुख्यार्थपरित्यागात्। मुख्यार्थो हि शब्दस्यार्थतत्त्वम्। तत्त्यागे कथं तत्त्वावेदकम्। सत्यमेतत् सति सम्भवे, असम्भवे तु स्यादेव तत्त्वं लक्ष्यमपि। तत्पदार्थः परोक्षं सर्वज्ञं सुखरूपं ब्रह्म, त्वंपदार्थोऽपरोक्षोऽल्पज्ञो दुःखी जीवः, तयोरैक्यविवक्षायां मुख्यार्थासम्भवात्, जहदजहल्लक्षणया चैतन्यमात्रं लक्ष्यते सोऽयं देवदत्त इतिवदिति चेन्न। तत्कालविशिष्टस्यैव देवदत्तस्य पर्यायेणैतत्कालविशिष्टत्वोपपत्तेर्न तत्र लक्षणा, मुख्यार्थसम्भवादित्यदृष्टान्तः। यत्र चासम्भवस्तत्र वाच्यपरित्यागेऽपि तद्विशिष्टमेव लक्ष्यते न स्वरूपमात्रम्। यथा मञ्चाः क्रोशन्तीत्युक्ते मञ्चसम्बद्धाः पुरुषा लक्ष्यन्ते न पुरुषमात्रम्। गङ्गायां कटकमास्त इत्यादौ गङ्गाविशिष्टतीरं लक्ष्यते न तीरमात्रम्। अन्यथा तीरान्तरव्यावृत्तेरलभ्यत्वात्। तस्माद्वाच्यविशिष्टमेव लक्ष्यं तत्त्वं नाविशिष्टम्। अविशिष्टे लक्षणानुपपत्तेश्च। तत्र यद्वाक्यमविशिष्टं लक्षयति, तदतत्त्वावेदकं स्यात्। लक्ष्यतत्त्वस्य विशिष्टानियमात्। अविशिष्टमेव च त्वं लिलक्षयिषसि। अन्यथाऽखण्डार्थासिद्धेः। तस्माल्लक्षणयाऽप्यतत्त्वावेदकमेव तत्त्वमस्यादिवाक्यम्। अपि च यदि सर्वज्ञत्वादिगुणविशिष्टं ब्रह्म वेदवाच्यं, अज्ञानदुःखादिमांश्च जीवः

**प्राणो वा आशाया भूयानित्युक्त्वा यो वै भूमा तत्सुखमित्युक्तेस्तस्यैव भूमत्वप्राप्तिः ।**

प्रत्यक्षसिद्धः कोऽयमत्रासम्भवस्सम्भाव्यते । कुतश्च महता संरम्भेण तन्निरासे प्रयत्यते । ऐक्यविवक्षायां मुख्यासम्भव इति चेन्न । प्रमाणसिद्धवैलक्षण्ययोरैक्यविवक्षाया एवासम्भवात् । अत एव ह्यादित्यो यूप इत्यादौ स्वरूपैक्यं मुखतः प्रतीतमप्यपहाय गौणैक्यं विवक्षितं विचक्षणास्समाचक्षते । नच वाच्यमतत्त्वावेदकसिद्धत्वेन मानासिद्धत्वाज्जीवपरवैलक्षण्यस्य तत्त्वमस्यादिवाक्येन मुख्यमैक्यं विवक्ष्यत इति । तत्त्वमस्यादेरतत्त्वावेदकत्वोक्तेः । कथं च भेदप्रमाणस्यातत्त्वावेदकत्वमुच्यते? भेदस्यासत्यत्वादिति चेत्तदेव कथं प्रमाणसिद्धस्य? न तत्प्रमाणमतत्त्वावेदकत्वादिति चेत् सेयमितरेतराश्रयता । तस्मान्नैक्यसिद्धिः । नचैतदभेदपरं, अतत्त्वमसीतिभेदपरत्वोपपत्तेः । "ऐतदात्म्यमिदं सर्वं तत्सत्यमि"ति दुःखादेः सत्यत्वप्रतिज्ञानात् । एतत्सृष्टत्वादेतत्पालितत्वादेतदात्माधीनमिदं सर्वम् । तस्मात्सत्यम् । एतस्य सत्यस्य सृष्टिक्षमत्वात् । "अथ हैनमाहुस्सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजत" इति हि श्रुतिः ।

> "मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना ।
> तस्मात्सत्यमिति प्रोक्तं परमो हरिरेवत्वि"ति च ॥

अतो नैव तत्पक्षे तत्त्वमस्यादिवाक्यं तत्त्वावेदकं वेदितव्यम् । तदखिलेऽपि वेदे पादप्रसारणन्यायेनाप्रामाण्यप्रतिपादनाभिप्रायः म्रियमाणस्य प्रविकसितोऽत्यन्तंमन्ततः । अतः श्रेयोर्थिभिरत्यन्तहेयं तन्मतमिति मतिमन्तो मन्यन्ते ॥ ॥ छ ॥

## इति द्युभ्वाद्यधिकरणम्

**"यो वै भूमा तत्सुखं** नाल्पे सुखमस्ति, भूमैव सुखमि"ति श्रूयते । तत्र संशयः किमयं भूमा प्राण उत परमात्मेति । **"प्राणो वा आशाया भूयानि"**त्युक्त्वा**"यो वै भूमा तत्सुखमि"**त्युक्तेः प्राणस्य **भूमत्वप्राप्तिः** । "अथ यद्यप्येतानुत्क्रान्तप्राणान्

उत्क्रान्तप्राणानित्यादिलिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति—

**॥ ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ ८ ॥**

**सम्प्रसादात्पूर्णसुखरूपत्वात् ।**
**अध्युपदेशात्सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा ॥**
**सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।**
**विश्वं नारायणं देवमक्षरं परमं पदम् ।**
**विश्वतःपरमां नित्यमिति हि श्रुतिः ॥**
**तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥**

**॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥**

**सर्वगतत्वादिधर्मोपपत्तेश्च ॥**

**॥ इति भूमाधिकरणम् ॥ २ ॥**

---

शूलेन समासं व्यतिषं दहेत्, नैवैनं ब्रूयुः, पितृहाऽसि मातृहाऽसी"त्युत्क्रमणादिलिङ्गादत्र **प्राणशब्दो वायुवाची** । नहि विष्णोर्व्याप्तस्य देहोत्क्रमणं समस्ति । अत आह—**भूमा सम्प्रसादादध्युपदेशात्** ॥ 'सम्प्रसादः' पूर्णसुखं, सम्यक्प्रसीदत्यनेन पुरुष इति । पूर्णमेवात्र सुखं विवक्षितम् । "नाल्पे सुखमस्ती"त्युक्तत्वात् । गुणगुण्यैक्याद्भूमा **विष्णु**रिति च युक्तमेव । विश्वतो दर्शनादिकमस्येति **विश्वाक्षम्** । **विश्वशम्भुवं** पूर्णसुखस्थानम् । **विश्वं** प्रविष्टत्वेन वर्तमानं **नारायणं** मुक्तसङ्घव्यक्तं **देवं** प्रकाशरूपं, 'द्यु प्रकाश' इति धातोः । विश्वतःपरमं च तदक्षरं चेति **विश्वतःपरमाम्** । 'विश्वं' पूर्णं गुणैः ॥ ॥ छ ॥

**धर्मोपपत्तेश्च** ॥ "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वं यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"त्यादिसर्वगतत्वस्वातन्त्र्यादिधर्माणां तत्रैवोपपत्तेश्च ॥ ॥ छ ॥

**इति भूमाधिकरणम्**

**अदृश्यत्वादिगुणा अदृष्टं द्रष्ट्रश्रुतं श्रोत्रित्यादिनाऽहं सोममाहनसं बिभर्मीत्यादेश्च तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते—**

**॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १० ॥**

**एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् ॥**
**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥**
**भर्ता सन्भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्टः ॥**
**यस्मिन्निदँ सञ्च वि चैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुरित्यादिश्रुतेः ॥**
**पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।**
**विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृताविति च स्कान्दे ॥**

---

**अदृश्यत्वादिगुणाः** "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतं श्रोत्रि"त्यादिनाऽक्षरस्यैवोच्यते । तच्च "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिना सूर्यादिविधारणान्मध्यमाक्षरं भवतुमर्हति । **अहं सोममाहनसं बिभर्म्यहं** त्वष्टारमुत पूषणं भगमि"ति मध्यमाक्षरस्य सूर्यादिविधारकत्वश्रुतेः । **आहनसं** आ समन्तात् हन्तारं संहर्तारमित्यर्थः । यद्यप्यदृश्यत्वादयो विष्णोस्सम्भवन्ति तथाऽप्यक्षरशब्दस्यान्यत्रापि प्रसिद्धेरुक्तयुक्तेश्च **मध्यमाक्षरस्यापि सम्भवादत्र तस्योक्ता इत्यत** आह— **अक्षरमम्बरान्तधृतेः** ॥ "यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतं चे"त्युक्त्वा **एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे**ति वचनेन **अम्बरान्तस्य सर्वस्य धृते**रुक्तत्वाद्**ब्रह्मैवाक्षरम् । भर्ता सन्** विष्णुर्जीवैर्हृदि **भ्रियमाणश्च बिभर्ति** च । एतदुक्तं भवति । यद्यपि हरिर्जगता भ्रियत इत्युच्यते जगति व्याप्तत्वात् । जगद्बिभर्ति च । नैतावता तयोराधाराधेयभावस्तुल्य इति मन्तव्यम् । किन्तु मूल**भर्ता सन् भ्रियमाणश्च बिभर्ति** च । युज्यते च तस्यैकस्यैव बहुरूपतया निविष्टत्वादिति । **यस्मिन्निदं** सम्यक्च विविधं **चैधि** ॥ ॥ छ ॥

## ॥ ॐ सा च प्रशासनात् ॐ ॥ ११ ॥

**सा च धृतिः प्रशासनादुच्यत एतस्य वा अक्षरस्य प्रशासन इत्यादिना ॥**

**तच्च प्रशासनं विष्णोरेव ।**
**सप्ताऽर्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।**
**चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपदित्यादिश्रुतेः ।**
**एकः शास्ता न द्वितीयोऽस्ति शास्ता ।**
**न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषामित्यादेश्च ॥**

## ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥

**अस्थूलमनण्वित्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च ॥**
**अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण इत्यादेर्विष्णोरेव ते धर्माः ॥**
**अस्थूलानणुरूपोऽसौ स विश्वोऽविश्व एव च ।**

---

**सा च प्रशासनात्** ॥ **सप्त**महदादिदेवता ब्रह्मादयः 'आर्द्धा' आ समन्ताद्वृद्धा **गर्भा** गरणेन भ्रियन्त इति । भूमा वननीयश्चेति भुवनः, **भुवनस्य विष्णोः**, **रेतो**रूपाश्च ते तस्यैव **प्रदिशा** प्रदेशेनाऽदेशेनाऽज्ञया, विविध**धर्मणि** तिष्ठन्ति ।

**एकश्शास्ता न द्वितीयोऽस्ति शास्ता**
गर्भे शयानं पुरुषं शास्ति शास्ते"ति भारते ॥ छ ॥

**अन्यभावव्यावृत्तेश्च** ॥ "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति **अस्थूलमनण्व**ह्रस्वमदीर्घमलोहितमि"त्यादिना स्थौल्याणुत्वादीनां व्यावृत्तिवचनाच्च । **अस्थूलोऽनणुः** "अणोरणीयान्महतो महीयानि"ति श्रुतेः । **अमध्यमः** मध्यमपरिमाणनियतिवर्जितः । मध्ये मीयमानत्वान्**मध्यमः** । अस्य व्यापकोऽन्यो नास्ती-

**विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम इति च ब्राह्मे ॥**

**॥ इत्यक्षराधिकरणम् ॥ ३ ॥**

**सदेव सोम्येदमग्र आसीदित्यादिना सतः स्रष्टृत्वमुच्यते ।**
**तच्च सत् बहुस्यां प्रजायेयेति परिणामप्रतीतेर्न विष्णुः ।**
**स ह्यविकारः सदा शुद्धो नित्य आत्मा सदा हरिरित्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति—**

**॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥**

**तदैक्षतेतीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते ॥**
**नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति दृष्टिरित्यादिना तस्यैव हि तल्लक्षणम् ॥**
**बहुत्वं चाविकारेणैवोक्तमजायमानो बहुधेति ॥**

**॥ इति सदधिकरणम् ॥ ४ ॥**

---

त्ययम**व्यापकः** । प्रवेशनाद्धिश्वः । यद्यपि लोकेऽतिस्थूलत्वात्यणुत्वादयो धर्मा एकत्र विरुद्धाः, तथाऽपि विष्णोरैश्वर्यादुपपद्यन्ते । तदाह— **विरुद्धधर्मरूपोऽसावैश्वर्यादि**ति ॥ ननु कथमतिमहत ईश्वरस्यात्यणुत्वमिष्यते । परमाणोर्वा परममहत्त्वोच्यते? रूपविशेषात्प्रदेशविशेषवत् । यथाहि परमाणुसम्बद्ध ईश्वरप्रदेशः परमाणुपरिमाणतामणति । मेरुमन्दरादिगस्तत्तत्परिमाणतामुपैति । एवं गगनसम्बन्धी तादृशो भवति । नच तेषां प्रदेशानामीश्वरान्मिथो वा भेदं वादिनो वदिन्ति । एकस्यैव तत्तत्प्रदेशात्मकत्वात् । एवमत्राप्यविरोधः ॥ ॥ छ ॥

**इत्यक्षराधिकरणम्**

**सदेव सोम्योदमग्र आसीदि**त्युपक्रम्य "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते"ति **सतः स्रष्टृत्वमुच्यते । तच्च सत्परिणामप्रतीतेः** प्रकृतिरिति प्राप्ते प्रत्याह—**ईक्षतिकर्मव्यपदेशात्सः** ॥ तत्सदैक्षत बहुभवेयं प्रजनयेयमि-

---

१ 'ग'—स एव च

**चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् ।**
**तच्चैतस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणीत्यादिनाऽऽकाशस्य प्रतीयते ।**
**स चाऽऽकाशो न विष्णुः ।**
**तस्यान्ते सुषिरꣳसूक्ष्ममिति श्रुतेः ।**
**अत आह—**

## ॥ ओं दहर उत्तरेभ्यः ओं ॥ १४ ॥

---

**तीक्षतिकर्मव्यपदेशात्** । "तत्तेजोऽसृजते"ति तत्पूर्वक**कर्म**[1]**व्यपदेशान्ना**मरूपे व्याकरवाणीत्यादिना **चेक्षति**पूर्वकव्याकरणादि**कर्मव्यपदेशात्** । **स एवेश्वरस्सन्** सर्वशब्दोक्तः । न तत्प्रधानमीक्षतिशक्त्या कर्तृकर्मशक्त्या च विहीनत्वात् ॥ छ ॥

### इति सदधिकरणम्

**चन्द्रादित्याद्याधारत्वं विष्णोरुक्तं** "सूर्याचन्द्रमसौ विधृतावि"त्यादिना । **तच्च "एतस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकशः किं तदत्र विद्यते** यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति, स ब्रूयाद्यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । **उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ"** इत्यादा**वाकाशस्य प्रतीयते** । स चाऽऽदित्याद्याधारः किं दहराकाशस्स्यादाहोस्वित्तत्स्थः कश्चिदितीदानीं चिन्त्यते । किं तावत्प्राप्तम्? दहराकाश इति । "**तस्यान्ते सुषिरꣳ सूक्ष्मं** तस्मिन्सर्वं प्रतिष्ठितमि"त्यादिश्रुत्यन्तरे दहरसुषिरस्य सर्वाधारत्वप्रतीतेः । तत्स्थः कश्चिदित्यपरः पक्षः । सोऽपि जीव इति प्राप्तम् । हृदयगतदहराकाशान्तस्थत्वात् । उपरि च तत्परामर्शदर्शनादिति । अत्रोत्तरं—**दहर उत्तरेभ्यः** ॥ न तावद्दहराकाशोऽत्र प्रतिपाद्यते । "तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति तदन्तस्थ-

---

1 'क' 'ख'—पूर्वकर्म—

**य आत्माऽपहतपाप्मा विजरो विमृत्युरित्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव ॥**
**योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति ।**
**स एष सर्वेभ्यः पाप्मभ्य उदित इत्यादिना विष्णोरेव हि ते गुणाः ॥**
**नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।**
**अशनायादिकानन्ये तत्प्रसादात्तरन्ति हीति पाद्मे ॥**
**सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ॥**
**सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम् ।**
**सत्यकामत्वमन्येषां भवेत्तत्काम्यकामितेति च स्कान्दे ॥**

---

स्यैवान्वेष्टव्यत्वप्रतिज्ञानात् । किन्तु तत्स्थः कश्चिदेव । स च दहराकाशे स्थितो **विष्णुरेव । "य आत्माऽपहतपाप्मा विजरो विमृत्यु**र्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प" **इत्यादिभ्यः** । नचाऽकाशजीवयोरेते गुणास्सम्भवन्तीत्याह—**योऽशनायापिपासे** इत्यादिना बृहदारण्यकवाक्येन **स एष** इत्यादिना छन्दोगवाक्येन च । अत्र ब्रह्मपुरं शरीरं दहरो भूताकाश इत्यादि च्छन्दोगोपनिषद्भाष्ये त्वभाणि निपुणतमं श्रीमच्चरणैः । तस्मादस्माकं न प्रयत्नोऽत्र ॥ [१]"दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यत" इत्यत्राऽकाशशब्देन भूताकाशो विवक्षितः । किं तदत्र विद्यते इत्यस्यायं परिहारः । अस्मिन्भूताकाशे परब्रह्माख्य आकाशो[२] विद्यते । आ समन्तात्काशनादाकाशः, आ समन्तात्कमश्नातीति वा । "अस्मिन्कामास्समाहिता" इति वाक्यशेषादा समन्तात्कामानश्नातीति वा । स च यावान्परमात्मा[३] व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणात्मकत्वात् । अल्पपरिमाणस्य महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् । "यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्ये"ति वचनात् । आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः । "आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यत" इत्यभिधानात् । अन्यथाऽनिशमित्युक्तिविरोधात् । "एष म आत्माऽन्तर्हृदयेऽणीयान्

---

१ इत आऽधिकरणान्तं श्रीमच्छन्दोगोपनिषद्भाष्यवाक्यमेवाविकलमुद्धृतम् ।

२ 'क' 'ख'—ब्रह्माख्याकाशो ३ 'ग'—यावान्बहिः परमात्मा

**॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५॥**

**अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते ।**
**सता सोम्य तदा सम्पन्नो भवतीति श्रुतेस्तं हि सुप्तो गच्छति ।**
**अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक इति लिङ्गं च तथा दृष्टम् ॥**
**अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वावित्यादिना तस्यैव तल्लक्षणत्वेनोच्यते ॥**

---

व्रीहेर्वा एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या" इति हृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्चेत्यादि[1], "दहरोऽस्मिन्नन्तराकाश" इति च पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य "यावान्वाऽयमाकाश" इत्यनन्तपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । पूर्वोक्तस्याभूताकाशत्वे "तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं" "तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" "सहस्रशीर्षं देवमि"त्यादि कथं युज्येत । नहि भगवदन्तःस्थितमेवान्यत्किञ्चिद्विजिज्ञास्यम् । तद्वावेत्यवधारणाच्चेत्यादि च सुविस्तृतम् ॥ ॥ छ ॥

**गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च** ॥ "इमाः सर्वाः प्रजा **अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति**" न विजानन्तीत्यर्थः ।

अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् ।
नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेरि"ति पर्यङ्कोपासनायाम् ॥

**तद्गतिर्**दहरस्थं प्रति गतिः । सुप्तगम्यत्वलिङ्गाद्ब्रह्मशब्दाच्च दहरस्थो विष्णुरेव । अरण्यनामार्णवद्वयाधिकरणलोकवत्त्वं **लिङ्गं च तथा दृष्टं** हि, ब्रह्मशब्देन सहैव दृष्टमित्यर्थः ।

"परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ।
अरो ण्यश्चार्णवौ दिव्यौ चिदानन्दरसात्मकावि"ति च पर्यङ्कोपासनायाम् ॥ ॥ छ ॥

---

१ सुविस्तृतमित्यत्रान्वेतीदम् ।

**॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥**

**एष सेतुर्विधृतिरिति धृतेः ।**
**एष भूताधिपतिरेष भूतपाल इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः ॥**
**एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ।**
**एतस्य वा अक्षरस्य प्रशासने ।**
**स हि सर्वाधिपतिः स हि सर्वपालस्स ईशः स विष्णुः ।**
**पतिं विश्वस्याऽत्मेश्वरमित्यादिश्रुतिभ्यस्तस्य ह्येष महिमा ॥**
**सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिरिति च स्कान्दे ॥**

**॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥**

**तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमिति प्रसिद्धेश्च॥**

---

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः** ॥ अस्मिन् विषयवाक्ये "**एष सेतुर्विधृतिरि**"ति जगद्धृतेरुक्तत्वाच्च दहरस्थो विष्णुरेव । "स सेतु"रिति वक्तव्ये छन्दोगवाक्ये "एष सेतुरि"ति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमादीयत[1] इत्यावेदितम् । सर्वत्र च सर्वेषां समानजातीयानां श्रुत्यन्तराणां सहोपलक्षणार्थमेतदुपक्रमे चा"स्मिन् ब्रह्मपुर"इत्युदाहर्तव्येऽ"प्येतस्मिन्ब्रह्मपुर" इत्युदाहृतम् । "गायति त्रायति चे"ति श्रुत्यन्तरमेव सदृशामधस्ताच्च सूचयाम्बभूवे । उपरिष्टाच्च क्वचित्क्वचिदेवम्भूतेषु वचनभेदेष्वयमेवाऽशयो बोद्धव्यः । "एष सर्वेश्वर **एष भूताधिपतिरेष भूतपाल** एष सेतुर्विधरण एषां लोकानामि"त्यादे**रस्य** विष्णो**र्महिम्नोऽस्मिन्** हृदयाकाशस्थे बृहदारण्यकवाक्यादुपलब्धेश्च दहरे[2] विष्णुरेव । तत्र "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" "सर्वस्य वशी"ति हृदयाकाशस्थं प्रस्तुत्य हि महिमाऽयमभिहितः । "**एतस्मिन्नु खल्वक्षरे गार्गी**"त्यादि **श्रुतिभ्यस्तस्या**स्य विष्णोरेव **ह्येष** धृत्यादिको **महिमा** ॥ ॥ छ ॥

**प्रसिद्धेश्च** ॥ "दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । **तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं**" "सहस्रशीर्षं देवमि"ति श्रुत्य-

---

१ 'क','ख'—माद्रियते
२ 'ग' — दहरस्थो

**तदन्तस्थापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥**

**॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥**

**परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाचेति जीवपरामर्शात्स इति चेन्न ।**
**तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥**

**॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १९ ॥**

**स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेत्याद्युत्तरवचनाज्जीव एवेति चेन्न ।**
**तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते ।**
**यत्प्रसादात्स मुक्तो भवति स भगवान्पूर्वोक्तः ॥**

**॥ ॐ अन्यार्थश्च परामर्शः ॐ ॥ २० ॥**

**यं प्राप्य स्वेन रूपेण जीवो निष्पद्यते स एष आत्मेति परमार्थश्च परामर्शः ॥**

---

न्तरे दहरगगनान्तर्गतस्य नारायणत्व**प्रसिद्धेश्च । तस्मिन्** गगने **यद्विशोक-स्तदुपासितव्यमि**त्यन्वयः । लिङ्गव्यत्यासस्तस्य पुरुषत्वज्ञापनार्थः । "एष म आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक" इत्यादावुदितगुणानामधिकरणैक्य-बलेन सन्निधीयमानानामनुकर्षणार्थश्चकारः । यत्तूक्तं हृत्पद्मसूक्ष्मसुषिरे सर्वप्रतिष्ठा-श्रुतेस्तस्यैव सर्वाधारत्वमिति, तत्रोच्यते—**तदन्तस्थापेक्ष**[1]**त्वादि**ति । सुषिरान्त-स्थपरमात्मापेक्षत्वात्सुषिरे सर्वप्रतिष्ठाश्रुते**र्न विरोधः** । यथा मन्दिरस्थमञ्जूषान्तगत-मपि मन्दिरस्थमिति सङ्कीर्यते, एवमिहापि ॥ ॥ छ ॥

**अन्यार्थश्च परामर्शः** ॥ "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये"त्यादि-वाक्ये **एष आत्मेति परामर्शः**परमात्मविषय इति यत्, तस्माच्च न जीव उच्यते ।

"यस्य सम्यक्प्रसादोऽस्ति विष्णोरेव स उच्यते ।
सम्प्रसादः स उत्थाय शरीरात्प्राप्य केशवम् ॥

---

१ 'म'—तदन्तस्थत्वा-

## ॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ २१ ॥

**दहर इत्यल्पश्रुतेर्नेति चेन्न ।**
**निचाय्यत्वादेवं व्योमवच्चेत्युक्तत्वात् ।**
**एष म आत्माऽन्तर्हृदये ज्यायानिति श्रुत्युक्तत्वाच्च ॥**

**॥ इति दहराधिकरणम् ॥ ५ ॥**

**अदृश्यत्वादयः परमेश्वरगुणा उक्ताः ।**
**तेषां सुखं शाश्वतं नेतरेषाम् ।**
**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।**
**कथं नु तद्विजानीयामित्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति—**

## ॥ ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥

**तमेव भान्तमनुभाति सर्वमित्यनुकृतेः, तस्य भासा सर्वमिदं विभातीति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः ॥**

---

यथास्वरूपस्तु भवेद्यं प्राप्यासौ सरूपताम् ।
आप्नोति स परो[1] ह्यात्मा भगवानिन्दिरापतिः ।
इत्याह सा रमादेवी पश्यन्ती परमं पदमि”ति च पयङ्कोपासनायाम् ॥ ॥ छ ॥

**अल्पश्रुतेरिति चेत्तदुक्तम् ॥** दहरे स्थित इत्यल्पौकस्त्वश्रुतेर्न परः किन्तु जीव इति चेन्नैवम् । सूत्रश्रुतिभ्यामुक्तोत्तरत्वात् ॥ ॥ छ ॥

**इति दहराधिकरणम्**

“तमात्मस्थं येऽनुपश्यन्ति धी**रास्तेषां सुखं शाश्वतं नेतरेषामि**”त्यत्र **तेषां सुखं शाश्वतमि**ति हि प्रस्तुतिः पूर्वपक्षोत्थापिका । “तमात्मस्थमि”ति सिद्धान्तबीजम् । “**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्वि-**

---

[1] ‘ग’— परमो

नहि शान्तिसुखमनुभाति सर्वम् ।
नच तद्भासा ।
अहं तत्तेजो रश्मीदिति नारायणभासा हि सर्वं भाति ॥

॥ ॐ अपि स्मर्यते ॐ ॥ २३ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति ॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति च ॥

॥ इत्यनुकृत्यधिकरणम् ॥ ६ ॥

विष्णुरेव जिज्ञास्य इत्युक्तम् ।

---

**जानीयामि**"ति विषयवाक्यम् ॥ **अनुकृतेस्तस्य च** ॥ अनुभानं नाम तदिच्छानुरोधेन भानम् । अनुकृतिशब्देन अनुभानमुच्यते । भानस्यापि क्रियारूपत्वात् । अन्यकृतीनामप्युपसंग्रहार्थ**मनुकृते**रित्युक्तम् । नहि काचिदपि कृतिर्हरीच्छानुरोधनमन्तरेण[1] भवति । भानश्रुत्याऽपि कृतिरुपसंगृहीता । भानपूर्वकत्वात्कृतेः । अतोऽ**नुकृते**रिति युक्तमुक्तम् । **अहं तत्तेजो** मदपेक्षया रश्मिरूपाणामल्पानामन्येषां तेजसां प्रेरकम् ॥ ॥ छ ॥

**अपि स्मर्यते** ॥ **मामकं** मदधीनम् । मत्तेज एवाऽऽदित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीत्यर्थः ॥ ॥ छ ॥

इत्यनुकृत्यधिकरणम्

मोक्षस्यैव परमपुरुषार्थत्वात्तस्य च समीचो विना विष्णुप्रसादादलभ्यत्वात्, तस्य चातिमात्रस्य ज्ञानप्रसाध्यत्वात्, तस्य चापरोक्षस्य जिज्ञासासमायत्तत्वात् **विष्णुरेव जिज्ञास्य इत्युक्तम्** । जिज्ञास्यो मीमांस्यो विचार्य इत्यर्थः ।

---

१ 'ग'—रोधमन्तरेण

**तत्र—**

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीनं विश्वे देवा उपासत इति सर्वदेवोपास्यः कश्चित्प्रतीयते ।**
**स च एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते ।**
**योऽयं मध्यमः प्राणः ।**
**कुविदङ्गेत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते ।**
**अतोऽब्रवीत्—**

**॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥**

**वामनशब्दादेव विष्णुरिति प्रमितः ॥**
**नहि श्रुतेर्लिङ्गं बलवत् ।**
**श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।**

---

"जिज्ञासितं सुसम्पन्नमि"ति भागवते । अर्थादुपास्य इत्यापद्यते । **तत्र** काठकश्रुतौ **सर्वदेवोपास्यः कश्चित्प्रतीयते** । स किं वायुरुत विष्णुरिति संशयः । किं तावत्प्राप्तं?वायुरेवेति । **ऊर्ध्वमि**त्यादिश्रुतेः । योऽयं देहे देहिना**मूर्ध्वं प्राणमुन्नयत्यपानम**भिमुख**मस्यति** तं **मध्य आसीनं देवा उपासत** इति **प्राणव्यवस्थापकत्वान्मध्यमत्वाच्च** । "यथा सम्राडेवाधिकृतान्विनियुंक्त एतान्ग्रामानधितिष्ठस्वेति, **एवमेवैष प्राण**" इत्यादिश्रुत्यन्तरान्मुख्यप्राणस्यैव प्राणानां व्यवस्थापकत्वम् । "अथेममेव नाऽप्रोद्योऽयं **मध्यमः प्राण**" इति बृहदारण्यकवाक्यात्तस्यैव मध्यमत्वं च । सर्वदेवोपास्यत्वं चाविरुद्धं तस्य । **कुविदङ्गे**त्यादौ प्रसिद्धत्वात् । तथाहि[1]—पुरा कचिद्ये नमस्कारादिना वृद्धास्सन्तो देवा रागाद्यवद्यशून्या आसन्ते । वायवे ज्ञानिने बाधिभिश्शरणार्थमितायाऽवासयन् स्वबुद्धिं सूर्येण सह ।

---

[1] "कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायाऽवासयन्नुषसं सूर्येणे"ति समग्रा श्रुतिः ॥

**पूर्वपूर्वं बलीयः स्यादेवमागमनिर्णय इति स्कान्दे ॥**
**तच्च लिङ्गं विष्णोरेव ।**
**तस्यैव प्राणत्वोक्तेस्तद्धै त्वं प्राण इति ॥**

**॥ ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥ २५ ॥**

**सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते ।**
**इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥**

**॥ इति वामनाधिकरणम् ॥ ७ ॥**

---

'**उष प्रकाशन**' इति धातोर्बुद्धिरुषश्शब्दोक्ता । वायुमुद्दिश्य बुद्धिमावासयन्नित्यर्थः । तस्माद्वायुरपि जिज्ञास्य इति प्राप्ते प्रतिविधीयते । **शब्दादेव प्रमितः** ॥ **एवमागमनिर्णयः** । एवं पूर्वपूर्वबलीयोभिः श्रुत्यादिभिरागमार्थनिर्णयः ।

श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् ।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ॥
एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते ।
अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च ॥
अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्य चे"ति सम्प्रदायविद्वचनादेतेषां भेदो वेदितव्यः ॥ ॥ छ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सत" इति तस्य सर्वदेवोपास्यस्येशानस्याङ्गुष्ठमात्रत्वं श्रूयते । नच विश्वव्याप्तस्य[1] विष्णोरङ्गुष्ठमात्रत्वं युज्यत इत्यत आह—**हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ भाष्यं स्पष्टार्थम् । अस्मद्विवक्षितस्यार्थलेशस्य मुखतः प्रतीतेः स्पष्टत्वमुच्यते । न पुनस्सर्वेषां भाष्यार्थानां स्पष्टत्वं प्रतिज्ञायते । अपरिमितार्थत्वाद्भाष्यस्य । अत्रेशानस्य विषयत्वेऽप्ययमेव न्यायः ॥ ॥ छ ॥

**इति वामनाधिकरणम्**

---

१ 'ग'—विश्वव्याप्तिमतो

**मनुष्याणामेव वेदविद्यायामधिकार इत्युक्तम्।**
**तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं नतु देवाद्यपेक्षयेत्याह—**

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ २६ ॥**

**तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि।**
**सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात् ॥**
**तिर्यगादीनां तदभावादभावः।**
**तेषामपि यत्र बुद्ध्यादिभावस्तत्राविरोधः। निषेधाभावात्।**
**दृश्यन्ते हि जरितार्यादयः ॥**

---

अथेदानीं प्रसङ्गादधिकार[1]चिन्ता क्रियते। **तिर्यगादि**व्यावृत्त्य**पेक्षयैव मनुष्यत्वविशेषणमुक्तम्। नतु देवादि**व्यावृत्त्य**पेक्षया**ऽपीति मन्तव्यम्। न ह्यत्र मनुष्यशब्देन मनुष्यमात्रविवक्षा। मर्त्योत्तमानामपि साधकानां मननादिशीलानां मनुष्यत्वात्। अत एव हि **तदुपरी**ति सूत्रपदं मनुष्यत्वादुपरीति व्याचष्ट। **तदुपर्यपि बादरायणस्सम्भवात्** ॥ साधकानां **सतां** इन्द्रादिपदयोग्यानां स्वपदप्राप्तिकारणभूतविद्याकर्मसामग्रीयोगेन तत्तत्पदप्राप्तेरुपरितनकालेऽपि वेदविद्यायामधिकरोऽस्तीति भगवान्**बादरायणो** वक्ति। तदधिकारसन्देहापोहातितात्पर्यज्ञापनार्थमधिकाराधिक्यज्ञप्तिदार्ढ्यार्थं च **बादरायणः** स्वयमेव वक्तीत्याह ॥ **ननु** नैवं भाष्यकार आह। सत्यम्। अनुक्तोऽपि तदभिप्रायो वर्ण्यते। सूत्रसिद्धं हि बादरायणपदम्। "यत्रानवसरोऽन्यत्रे"त्युक्तन्यायसिद्धं वक्तिपदम्। नहि महतामतिस्पष्टार्थव्याख्यानचापलशीलता भवति। सर्वत्र चानुसन्धेयोऽयं न्यायः, यत्र सूत्रपदानि मुखतः सिद्धार्थानि। **तिर्यगादीनां** तिर्यक्स्थावाराणाम्। **तेषामपी**त्यादिरपिपदव्याख्या। **तेषां** मध्ये**ऽपि** येषु विशिष्टबुद्धिवागादिभावस्तेष्व**विरोधो** विशेषलक्षणभावे **निषेधाभावात्**। **दृश्यन्ते हि जरितार्यादय**स्तिर्यञ्चो"प्ययमग्ने जरिते"त्यादिसूक्तद्रष्टारः ॥ ॥ छ ॥

---

1 'ग'—दधिकारि—

**॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥**

**मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् ।**
**तत्र यदि मनुष्याः सन्तो देवा भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेन्न ।**
**अनेकेषां देवतापदप्रतिपत्तेर्दर्शनाद्यत्र पूर्वे साध्याः सन्ति देवा इति ॥**

**॥ ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥ २८ ॥**

**वाचा विरूप नित्ययेत्यादिश्रुतेराप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतः प्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वाच्छब्दे विरोध इति चेन्न ।**

---

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** ॥ किञ्चित्कालं **मनुष्या एव** सन्तः पश्चाद्देवोपदेवादयो **भवन्तीति** हि **तदुपरीत्यत्रोक्तम्** । **मनुष्याणां सतां देवादित्वप्राप्त्युपरी**ति विवरणात् । यद्येतदेवं तर्हि **तत्पूर्वं** तेषां देवादित्वप्राप्तेः पूर्वं, देवतानाम**भावात्त**त्तद्देवतोद्देशेन चोद्यमानेषु कर्मसु **विरोधः** । उद्देश्याभावा**दिति चेन्न** । केषाञ्चिदिन्द्रादीनां देवानां स्वस्वपदात्ययेऽन्येषामिन्द्रादीनां तत्तत्पदप्रतिपत्तिः । तेषामत्यये वाऽपरेषामित्यनेन क्रमेणा**नेकेषाम**धिकारिणामेकैकगणशोऽनन्तानां **देवतापदप्रतिपत्तेर्दर्शनात्** । "ते ह नाकं महिमानः सचन्ते"-त्यादिवाक्यात् । 'ते' देवा 'नाकं' मोक्षं महिमगुणात्मकाः 'सचन्त' आप्नुवन् । **यत्र** नाके **पूर्वे साध्या** वस्वादयो **देवास्सन्ति** । अथवा **यत्र पूर्व सिद्धा** मुक्ता**स्सन्ती**त्यर्थः । नचात्र नाकः स्वर्गः । नहि स्वर्गे पूर्वसिद्धानां पश्चात्तनानां च देवानां सहभावः सम्भवति । नाकशब्दश्चादुःखवाची मोक्षं वदन्नेव स्वार्थं पूर्ण लभते ॥ ॥ छ ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्** ॥ **"वाचा विरूप नित्यये"**तिश्रुतेरेव वेदस्य नित्यत्वमुक्त्वा युक्तिं चाऽह—**आप्त्यनिश्चयादि**त्यादिना ।

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति ।**
**यथैव कालनियमः सुरादिनियमस्तथा ।**
**तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यतीत्यादेरत एव शब्दात्तेषां प्रभवनियमात् ।**
**महतां प्रत्यक्षात् ।**
**यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥**

## ॥ ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥

**अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं भवति ॥**

---

अयं भावः—न तावद्धर्माद्यनङ्गीकारे शास्त्रस्यार्थवत्त्वम् । अर्थान्तराभावात् । अङ्गीकारे च न प्रत्यक्षादनुमानाद्वा तत्सिद्धिरिष्यते । तदगोचरत्वात्तेषाम् । नच पौरुषेयवाक्यात्तदवगमः सुलभः । पुरुषाणामाप्तिनिश्चये प्रमाणाभावात् । तन्निश्चायकप्रमाणान्तराभ्युपगमे तस्यापि पौरुषेयत्वे तत्प्रामाण्यनिश्चयस्य पूर्वावस्थत्वादपौरुषेयमेषणीयं मूलप्रमाणम् । प्रसिद्धं च वेदस्य स्वतःप्रामाण्यं, वेदत्वादेव । "वेदा ह्येवैनं वेदयन्ती"त्यन्यनिरपेक्षप्रामाण्यश्रुतेश्च । न तद्युज्यते पौरुषेयत्वे । पुरुषज्ञानाधीनत्वप्रसङ्गात् । तस्य चाज्ञानविप्रलम्भसम्भवात् । तस्मान्नित्यो वेदोऽभ्युपगन्तव्यः॥ न तस्य नित्यस्यानित्यैर्देवैर्वाच्यवाचकभावस्सम्बन्धो भवीति । **तस्माच्छब्दे** प्रामाण्य**विरोधः** । कञ्चित्कालं वाच्याभावेनाप्रामाण्यात्सर्वदाऽपि तथात्वप्राप्ते**रिति चेन्न । "सूर्याचन्द्रमसौ धाता," "यथैव कालनियम"इत्यादेरत एव शब्दात्तेषां** प्रभवनियमावगमात् । अयं हि शब्दो**ऽत एव** धातुर्विष्णोस्तेषां तेषां देवानां पूर्वपूर्वप्रकारेण प्रभवनियमं व्यपदिशति । **महताम**तीतानागतार्थदर्शिनां पूर्वपूर्वावगमे पुनरन्यान्यस्य प्रभवनियमस्य प्रत्यक्षसिद्धत्वा**दितरेषामनु**मानसिद्धत्वाच्च—विमतः कालो देववानप्रलयकालत्वादिदानीन्तनकालवदिति ॥ ॥ छ ॥

**अत एव च नित्यत्वम् ॥ अत एव शब्दस्य** नित्यत्वहेतो**रेव च देवप्रवाहनित्यत्वं** सुसाधं **भवति** विनाऽपि हेत्वन्तरान्वेषणेन । यस्माद्धेतोः प्रामाण्यविरोध आशङ्क्यते । नह्यनित्यत्वे वाच्यस्य शब्दनित्यत्वं समञ्जसं स्यात् । **नच** पदस्थानां देवादीनामेव नित्यत्वमाशङ्कनीयम् । अप्रलयप्रसङ्गात् । नच सर्ग-

प्रलयाभावो वाच्यः। श्रुतिविरोधात्। अथापि स्यात्, नालं श्रुतिः सृष्ट्यादिकं वेदादिकं च प्रमापयितुं, विधिपरत्वादिति। मा भूत्तर्ह्यग्निहोत्रं जुहोतीत्यादिवाक्यानामग्निहोत्रादिसिद्धार्थवाचकत्वम्। ततश्चाग्निहोत्रहोमादौ प्रमाणाभावाद्वैदिकक्रियालोपः प्रसज्येत। नाग्निहोत्रादिसिद्धे तात्पर्यं कार्य एवेति वदतस्तद्विपरीतमेवोत्तरं स्यात्। तथा सति क्रियालोपः स्यादिति चेन्मैवम्। उच्छ्वासादिक्रियाकरणात्। विहितक्रियालोपः स्यादित्युक्तमिति चेत्, कस्य विहिता क्रिया? ब्राह्मणो यजेतेत्यादौ विहिता हि ब्राह्मणादिवर्णाश्रमिणामिति चेन्न। यजनविधिमात्रपरस्य वाक्यस्य ब्राह्मणादावमानत्वात्। अतश्चायं चण्डमतिश्चण्डालादेर्यज्ञाधिकारमप्यनुजज्ञिवान्। नचाग्निहोत्रमेव सायमादावेव हुतवह एव तत्तन्मन्त्रेणैवेत्थमेव होतव्यमिति नियमः। कस्यचित्कदाचित्कुहचिद्यथाकथञ्चित्केनचित्करणस्य यज्ञत्वं स्यात्। अहो यथोद्गतस्य कर्मतत्वमीमांसापरिखिन्नमनसो वेदतात्पर्यविचारणाकौशलपरिपाकः। उक्तं च "यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेदि"ति भगवतैवानुभाष्ये ॥

अथ मतं न यजिविधिमात्रपरं वाक्यं ब्रूमः, किन्तु द्रव्यकालकर्तृकरणादिकारकविशिष्टविधिपरं, अतो नोक्तदोष इति। तदपि हन्त तापसस्य हृदयतापातिरेकादुत्कसितमिव[1]। सिद्धान्विते लिङादिपदशक्तिस्वीकारापत्तेः। ननु यद्यपि विध्यर्थतया सिद्धवस्तुकथनं न निषिद्ध्यते। कार्य एव तात्पर्यं पर्यवसितम्। अतो माऽपसिद्धान्त इति चेन्मैवम्। स्वर्गाद्यनुभावार्थत्वात्क्रियाविधेः सिद्धपरत्वं क्रियावाचिनामपि किं न स्यात्। प्रयोजनानुद्देशेनाधिकारिणः कर्तव्यतामात्रविधिपरत्वाभ्युपगमे वेदस्य, तदादिष्टमकुर्वतः किं स्यात्। प्रत्यवायस्स्यादिति चेत्, तत्परिजिहीर्षवस्तर्हि विहितमनुतिष्ठन्तीति तत्परिहारार्थता विधेरभ्युपगता। अतस्सिद्धपरताऽपि पदानां बलादाश्रयणीया। तस्माच्छ्रुतिसिद्धं देवतादिकमपि नापलपनीयम् ॥

---

१ 'क''ख''ग'—दुत्कसितमिव (?)।

२ 'ग'- कार्ये–

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति सूत्रविरोधश्च तत्पक्ष एव भवति । क्रियातिरिक्तस्य कस्यचित्कार्यस्य लिङाद्यर्थत्वाभ्युमगमात् । ननु "स्वर्गकामो यजेते"त्यादिवाक्यप्रामाण्यार्थमेव क्रियातिरिक्तं किञ्चित्स्थायि कार्यं विध्यर्थत्वेनाभ्युपगन्तव्यम् । क्रियायाः क्षणविनाशित्वेन देहान्तरोपभोग्यस्वर्गादिफलदानायोगादिति । मैवम् । क्रियातिरिक्ते व्युत्पत्त्यसम्भवात् । न तावल्लोकतस्तत्र व्युत्पत्तिः । अलौकिकत्वात्तस्य । नापि जिह्वादाविव प्रसिद्धपदसमभिव्याहारात् । ज्योतिष्टोमादिवाक्येषु तद्वाचकपदाभावात् । क्रियामात्रवाचिनो हि धातवः । लिङादयस्तु कर्तव्यतामात्रनिष्ठाः । अतो नात्र कार्याभिधायि पदं पश्यामः । प्रामाण्यानुपपत्तितर्कावगम्यं कार्यं लिङाद्यर्थं ब्रूम इति चेत्तर्हि क्रियाकर्तव्यतायां प्रमाणाभावात्क्रियालोपः स्यात् । तर्कगम्यत्वे चापूर्वत्वं प्रत्यादिष्टं स्यात् । तथाच न वेदैकगम्यो नियोगः । नच वाच्यं तर्कस्य स्मृतिरूपत्वान्न प्रमाणान्तरतापत्तिरिति । अनुभूतविषयत्वादपरोक्षरूपत्वाच्च स्मृतेः । तर्कस्य लैङ्गिकत्वात् । सापेक्षज्ञानत्वं स्मृतिलक्षणं लक्षणविदो वदन्ति । अतो भाविभूतप्रमाणान्तरसापेक्षत्वान्न तर्कस्मृत्योर्भेद इति चेन्न । पूर्वानुभूतसंस्कारमात्रजं ज्ञानं स्मृतिरिति स्वाभ्युपगमविरोधात् । नच तर्कस्यानुमानादधिकं प्रमाणान्तरसापेक्षत्वं लक्ष्यते । अथ प्रमाणानुग्राहकत्वात्तर्कस्य स्वविषयभाविप्रमाणान्तरसापेक्षत्वमस्तितरामिति, तदयुक्तम् । व्याप्तिमतस्तस्य स्वयमनुमानात्मकत्वेन प्रमाणानुग्राहकत्वमात्राभावात् । व्याप्तिविरहिणस्तु तदाभासत्वेनाननुग्राहकत्वात् । नच नियतावयवमेवानुमानं प्रमाणमिति नियमः । निजसमयनियमितावयवरहितेनापि तेन परपरिजल्पितेन साध्यार्थावगमात् । नियमसाधकप्रमाणाभावाच्च । नचानुमानात्तत्सिद्धिः । तत्साधकस्यानुमानस्य नियतावयवत्वाङ्गीकारेऽनवस्थाप्रसक्तेः । तर्कमात्रत्वे तत्प्रामाण्यं प्रथमत एव समाश्रयणीयम् । अतः किमनेनाजागलस्तनायमानेनावयवनियमकल्पनेन । नन्वसति नियमे प्रयोजकक्लृप्त्यभावान्न्यूनाधिकताविवेकानुपपत्तिरिति । मैवम् । दूषणोक्तिवदुपपत्तेः । नहि परप्रयुक्ते साधने दूषणं सनियममुपन्यस्यते । नचानवस्थादि-

## ॥ ॐ समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ ३० ॥

**अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽवृत्तावप्यविरोधः।**

**यथापूर्वमिति दर्शनात्॥**

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**

---

दोषोक्तिरवयवनियमवती भवति। नच तत्र न्यूनाधिकविवेको दुरवबोधः। एवमिहापि द्रष्टव्यम्।

नच वेदप्रामाण्यानुपपत्त्या क्रियातिरिक्तस्थायिकार्यान्वेषणं युक्तम्। कालान्तरभाविफलदायिनः सर्वज्ञस्येश्वरस्य वेदसिद्धत्वोक्तेः। एतेनैवैतदप्यपास्तं, यदाहुरेते जैमिनिमतसमाश्रयमानेन देवताद्यभावम्। वेदप्रमाणादेव देवतातद्देहदेशभेदसंवेदनस्य सौलभ्यसम्पादनात्। मध्वाद्युपास्तिषु प्राप्तपदत्वेन तत्प्राप्त्यसम्भवात्तद्दर्शित्वाच्च तत्फलाय देवानामनधिकारं ब्रुवता जैमिनिनाऽन्यत्राधिकारमभ्यनुजानता देवतासद्भावोऽभ्युपगतः। "धर्मं जैमिनिरत एवे"त्यादिना चेश्वरवादित्वमावेदितं जैमिनेः। अतस्सुसाधीयः साधितं देवतोत्पत्त्यङ्गीकारेऽपि शब्दे प्रामाण्याविरोध इति॥ ॥ छ ॥

अथ कथमेतर्हि तेषूद्भवाभिभवैः पूर्वपरीभावं गतेषु विभिद्यमानरूपनामकर्मसु रुद्रेन्द्रादिनाम्नां नीललोहिततुविग्रीववज्रधरवृत्रवधादिशब्दानां च वृत्तिनियमः सम्भाव्यत इत्यत आह---**समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च**॥ पौरस्त्यानां पाश्चात्यानां च **देवानां समाननामरूपत्वात्** समानधर्मकर्मत्वाच्च **प्राप्तपदानां मुक्त्या** स्वस्वपदा**दावृत्तावपि** न तच्छब्दवाच्यत्वविरोधः। स्वपदेष्ववृत्तावपीति वाऽर्थः। **यथापूर्वमिति** समाननामरूपत्वेऽपि तामेव श्रुतिं प्रमाणीकरोति॥ ॥ छ ॥

---

१ 'क' 'ख'---तद्दर्शनवत्त्वाच्च
'ग'---अर्थदर्शनवत्त्वाच्च

**ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।**
**वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वर इति स्मृतेश्च ॥**

**॥ ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ ३१ ॥**

**वसूनामेवैको भूत्वेत्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥**

---

मुख्यवाच्यस्य विष्णोस्सर्वदा[1] विद्यमानत्वाच्च न शब्दे विरोधः । तथाच योजना, **अत एव शब्दात्तेषां प्रभवनियमात्** शब्दादेव देवानां प्रभवनियमनादिकर्ताऽवगम्यते । अतस्तस्मादेव शब्दे विरोधः परिहृतः । प्रत्यक्षश्चासौ **महताम्** । "पुरुषमीक्षते" "यमन्तः समुद्रे कवयोऽवयन्ती"त्यादिश्रुतेः । **यथा** येन प्रकारेणेदानीं देवा भवन्ति **तथा**ऽन्यदाऽपीत्य**नुमानाच्च** तदवगमः ॥ ॥ छ ॥

**अत एव च नित्यत्वम्** ॥ **अत एव** शब्दनित्यत्वादेव देवप्रवोढु**र्नित्यत्वम्** ॥ छ ॥

**समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च** ॥ 'समानानि' सदृशानि नामानि येषां रूपाणां तानि 'समाननामानि' समाननामानि रूपाणि यस्य स भगवान् 'समाननामरूपः' योग्यनामरूप इत्यर्थः । 'नामे'ति सामान्यनामोक्तेरखिलनामविवक्षा । नहि विष्णवन्यरूपाणां सदृशनामत्वम् । शब्दप्रवृत्तिहेतुवैकल्याद्कात्स्न्र्यपारतन्त्राभ्याम् । तत्साकल्याद्विष्णुरेव समाननामरूपः । अतो विष्णोस्समाननामरूपत्वात्तदभावाच्चान्येषां न तस्य सर्वशब्दवाच्यत्वविरोधः । **यथापूर्वमिति दर्शनात्** । **यथापूर्वं** पूर्णज्ञानस्सर्वस्वतन्त्रः, अतस्समाननामरूपः स्थितस्तथैव सन् **धाता** सूर्यादीन**कल्पयत्** । अतस्सूर्यादिक्लृप्तेः प्रागपि शब्दप्रामाण्याविरोध इति सिद्धम् ॥ ॥ छ ॥

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः** ॥ "असौ वा आदित्यो देवमधि"त्याद्या मधुविद्या श्रूयते । तत्र "स य एतदेवममृतं वेद **वसूनामेवैको भूत्वाऽग्नि-**

---

१ 'ग'—सदा

॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥

ज्योतिषि सर्वज्ञत्वे भावाच्च ।
आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावाश्चित्यसिद्धत्वाद्विद्यानाम् ॥

॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥

फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते ।
अस्ति हि प्रकाशविशेषः ॥
यावत्सेवा परे तत्त्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥
तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म चेति स्कान्दे ॥
उक्तफलानधिकारमात्रं जैमिनिमतम् ।
अतो न मतविरोधः ।
सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत इति च ब्राह्मे ॥

॥ इति देवताधिकरणम् ॥ ८ ॥

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्याप्यह हारेत्वा शूद्रेति पौत्रायणोक्तेरधिकार इत्यत आह---

॥ ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ॥ ३४ ॥

---

नैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती"त्यादिना तद्गतां वस्वादिपदं प्राप्यफलमवगम्यते । नच तत्प्राप्तपदानां वस्वादीनां सम्भवति । तस्मात्तत्रानधिकारं जैमिनिर्मन्यते ॥ ॥ छ ॥

इति देवताधिकरणम्

**नासौ पौत्रायणः शूद्रः ।**
**शुचाऽऽद्रवणमेव शूद्रशब्देनोक्तम् ।**
**कम्वर एनमेतत्सन्तमित्यनादरश्रवणात् ।**
**स ह सञ्जिहान एव क्षत्तारमुवाचेति सूच्यते हि ॥**

**॥ ॐ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ३५ ॥**

**अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमेश्च ॥**
**रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयत इति ब्राह्मे ॥**

---

**मनुष्याधिकारत्वादित्युक्ते**[1] **शूद्रस्यापि** वेदविद्यायामधिकारस्स्यात् । **शूद्रस्यापि** मनुष्यत्वाविशेषात् । "**अह हारेत्वा शूद्र** तवैव सह गोभिरस्त्वि"ति पौत्रायणं प्रति रैक्वस्योक्तेश्च । पौत्रायणं वेदविद्यां श्रावयिष्यन्नेव हि रैक्वः शूद्र-शब्देन सम्बोधयामास । **अह शूद्र हार इत्वा** च गोभिस्सह तवैवास्त्विवति । **इत्वा** शकटः । अत्रोच्यते - **शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥** **शुचाऽऽद्रवणमेव** शूद्रशब्दप्रवृत्तिहेतुः । शुचां प्रत्याद्रवणं, शुचा वा क्षत्तारं प्रत्याद्रवणं, रैक्वं प्रत्याद्रवणं वा । तदाद्रवणाच्छूद्र इत्युच्यते । तृतीयात्तृतीयस्याप्य-तिशयार्थत्वात्[2] । कस्मात् शुचाऽऽद्रवणमित्यत आह- —**कम्वर** इति । "**कम्वर एनमेतत्सन्तं** सयुग्वानमिव रैक्वमात्थे"ति हंसात्स्वा**नादरश्रवणात्** । **एतत्सन्तं** निन्द्यं सन्तं, एतच्छब्देन दुःखादिरपरोक्षतयोच्यते । "**क्वचिद्विश्वं क्वचिद्ब्रह्म क्वचिन्निन्द्यमुदीर्यत**" इति तन्त्रनिरुक्तेः । "**स ह सञ्जिहान एव क्षत्तारमुवाचे**"**ति** वचनेनैव शुगस्य **सूच्यते हि** । अन्यथा नैवानादरश्रवणेऽपि शयनात्सञ्जिहान एव क्षत्तारं रैक्वोऽन्वेषणे नियुञ्जीत ॥ ॥ छ ॥

**क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्** ॥ इतश्च **न पौत्रायणश्शूद्रः** । "**अयमश्वतरीरथ**" इत्युक्त्वा स्वकीयस्य चित्ररथस्य रैक्वे निवेदनेन चित्ररथ-

---

१ 'क''ख'—स्युक्तेः

२ गकारघटितवर्गात्स्वं विहाय तृतीयस्य तवर्गस्य तृतीयो दकारः । तथाच शूग्द्र इत्यत्र गकारस्य विलोपः ।

**यत्र वेदो रथस्तत्र न वेदो यत्र नो रथ इति च ब्रह्मवैवर्ते ॥**

**॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥**

**अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यध्ययनस्य संस्कारपरामर्शात् ।**
**नाग्निर्न यज्ञो न संस्कारो न व्रतानि शूद्रस्येति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च ॥**
**उत्तमानां तु स्त्रीणां न शूद्रवत् ।**
**सपत्नीं मे पराधमेत्यादिष्वधिकारदर्शनात् ।**
**संस्काराभावेनाभावस्तु सामान्येन ।**
**अस्ति च—**
**स्त्रीणां प्रदानकर्मैव यथोपनयनं तथेति ॥**

**॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ३७ ॥**

**नैतदब्राह्मणो विवक्तुमर्हतीति शूद्रत्वाभावनिर्धारणे प्रवृत्तेश्च ॥**

---

सम्बन्धित्वावगमात् । तेन लिङ्गेन क्षत्रियत्वावगमात् । अतो न शूद्रस्याधिकारः । गर्दभादश्वायां जाता 'अश्वतर्यः' ॥ ॥ छ ॥

इतश्च न शूद्रस्याधिकारः । **संस्कारपरामर्शात्तदभावाभिलापाच्च** ॥ अन्यार्थवचनं 'परामर्शः' । **अध्ययनस्या**ङ्गत्वेनोपनयन**संस्कारपरामर्शात्।** शूद्रस्य संस्काराभावाच्च । **पराधम** पराणुद । **"सपत्नीं मे पराधम"** "किं भ्राता सद्यदनाथं भवति" "किमेता वाचा कृणवा तवाहमि"त्यादिषु शाचीयम्यूर्वश्यादीनामधिकारदर्शनादुत्तमस्त्रीणां **न शूद्रवद**नधिकारः । यद्यपि स्त्रीणामुपनयनसंस्कारो नास्ति, तथाऽपि तत्प्रतिनिधिरन्योऽस्तीत्याह— **अस्ति चेति** । **अस्ति च** स्त्रीणां संस्कारः, **स्त्रीणां प्रदानकर्मै**त्यादि व्यासवाक्यं **चास्ति** तत्प्रमाणम् ॥ ॥ छ ॥

**तदभावनिर्धारणे च प्रवृत्तेः** ॥ "सोऽहं सत्यकामो जाबलोऽस्मि भो" इति सत्यकामेनोक्ते **नैतदब्राह्मणो विवक्तुमर्हतीति निर्धारणे** सत्येव गौतमस्य तदुपनयनादौ **प्रवृत्तेश्च** न शूद्रोऽधिकारी ॥

## ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणमिति प्रतिषेधात् ॥
नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयत इति स्मृतेश्च ।
विदुरादीनां तूत्पन्नज्ञानत्वाद्विशेषः ।

॥ इत्यपशूद्राधिकरणम् ॥ ९ ॥

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीत्युद्यतवज्रज्ञानान्मोक्षः प्रतीयत इत्यतोऽब्रवीत्—

## ॥ ॐ कम्पनात् ॐ ॥ ३९ ॥

एजतीति कम्पनवचनादुद्यतवज्रो भगवान् ।
को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादिति हि श्रुतिः ।
प्राणस्य प्राणमिति च ॥
नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत इति हि स्कान्दे ॥

---

"आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।
गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥" इति सामसंहितायाम् ॥ ॥ छ ॥

**विदुरादीनां तु** जन्मान्तर एव वेदादुत्**पन्नज्ञानत्वाद्विशेषः** ॥ ॥ छ ॥

**इत्यपशूद्राधिकरणम्**

**यदिदं जगद्**दृष्टं श्रुतं च तत्**सर्वं प्राण एजति** प्राणाधारं कम्पते । एजृ कम्पन इति धातोः । प्राणा**न्निस्सृतं** च तदेतद्**वज्रं ये विदुस्तेऽमृता भवन्ति** ।

**चक्रं चंक्रमणादेष वर्जनाद्वज्रमुच्यते ।**
**खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिरिति हि ब्रह्मवैवर्ते ॥**

**॥ इति कम्पनाधिकरणम् ॥ १० ॥**

**हृदय आहितं ज्योतिः परमात्मेत्युक्तम् ।**
**तत्र योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यत्रोभौ लोकावनुसञ्चरतीति वचनाज्जीव इति प्रतीयत इत्यत उच्यते—**

**॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥**

**विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्मा विष्णुरेवाऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवाऽनन्द इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव ॥**
**प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जंद्यातीति वचनात्तस्यापि लोकचरणमस्त्येव ॥**

**॥ इति ज्योतिरधिकरणम् ॥ ११ ॥**

---

भाययतीति **भयम् । कम्पनात् ॥** सर्वजगतस्तदाधार**कम्पनवचनाद्वज्रो** विष्णुरेव । नह्यन्यस्य सर्वचेष्टकत्वं युक्तम् । नापि सदोद्यतत्वम् । चंक्रमयतीति[1] **चक्रम्** ॥

**इति कम्पनाधिकरणम्**

"कतम आत्मे"ति प्रश्ने "**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः** स समानस्स**न्नुभौ लोकावनुसञ्चरती**"त्युत्तरं पठ्यते । तत्र संशयः । किमयं ज्योतिश्शब्दवाच्यः शारीरस्स्यादाहोस्वित्परमात्मेति । उभयलोकसञ्चरणा- '**त्प्राणेष्वि**"ति प्राणोपहितत्वाच्च शारीर इति पूर्वपक्षः । **ज्योतिर्दर्शनात् ॥** "**विष्णुरेव ज्योतिरिति**" विष्णोरेव मुख्यज्योतिष्ट्वोक्तेः, "**प्राणेष्वि**"ति प्राणनियन्तृत्वेन स्थित्याख्यानात् **प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जंद्यातीति**, प्रकर्षेण **आ** समन्तात्, ज्ञेन परमात्मनाऽ**न्वारूढो** जीवः शरीरमुत्सृजन् **यातीति** तस्यापि

---

१ 'क' 'ख'—चंक्राम—

**सर्वाधारत्वं विष्णोरुक्तम् ।**
**तत्राऽकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेत्यत्राऽकाशस्य प्रतीयते ।**
**वैनामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते—**

**॥ ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥**

**ते यदन्तरा तद्ब्रह्मेत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव ॥**
**अवर्णं, यतो वाचो निवर्तन्त इत्यादिश्रुतेस्तस्य हि तल्लक्षणम् ॥**
**अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनादिति हि ब्राह्मे ॥**

**॥ इत्याकाशाधिकरणम् ॥ १२ ॥**

---

लोकचरणकथनाद्विष्णुरेव ज्योतिरिति सिद्धान्तः ॥ **विष्णुरेव बलम्**, "स वै बलं बलिनां चापरेषामि"ति हि भागवते । **विष्णुरेव यशः**, "तस्य नाम महद्यश" इति हि श्रुतिः । "**विज्ञानमयः प्राणेष्वि**"त्यादि शब्दलिङ्गानां जीव एव सावकाशत्वप्रतीतेः पुनरुक्तिर्ज्योतिश्शब्दसमन्वयस्य ॥ ॥ छ ॥

**इति ज्योतिरधिकरणम्**

"आकाशस्तल्लिङ्गादि"त्यत्र विष्णोर्यौगिकाकाशत्वप्रसाधनाद्यद्यपि न विष्णुर्विहातुं शक्यते । तथाऽप्यत्र **वैनामेति** प्रसिद्ध्यतिशयद्योतकनिपातद्वययोगेन रूढेर्बलवत्त्वात्**प्रसिद्धाकाशोऽप्यङ्गीकर्तव्यः** । आकाशशब्दस्योभयत्र प्रसिद्धेरिति पूर्वः पक्षः । अयं चास्मिन्पादे प्रत्यधिकरणमनुगमयितव्यो न्यायः । **आकाशोऽर्थान्तरत्वादिव्यपदेशात्** ॥ **ते यदन्तरा ते** नामरूपे **अन्तरा**, यन्नाम च रूपं च न भवतीति यावत्, यद्वा नामि च रूपि च न भवति **तद्ब्रह्मेति** नामरूपाभ्या**मर्थान्तरत्व**तद्रहितत्वब्रह्मत्व**व्यपदेशादाकाशो हरिरेव । अर्थान्तरत्व**नामान्तरत्वा**दिव्यपदेशादि**ति वा । "**अवर्ण**मचक्षुश्श्रोत्रमि"त्याद्याथर्वणी श्रुतिः । **अवर्णं न** वर्णः, शुक्लादि[1]वर्णरहितं च, नच वर्ण्यते नापि वर्णात्मकमिति । **अनामा सोऽप्र-**

1 'क' 'ख' -- न वर्णः शुक्लादिः

असङ्गत्वं परमात्मन उक्तम् ।
तद्य स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति स्वापादिद्रष्टुः प्रतीयते ।
स च जीवः प्रसिद्धेरित्यतो वक्ति—

॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥

प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम् ।
प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जंद्यातीति भेदव्यपदेशान्न जीवः पर एवासङ्गः ॥
स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥

इति सुषुप्त्यधिकरणम् ॥ १३ ॥

---

**सिद्धत्वात्** सर्वात्मना स्वात्मनोऽन्यस्य । **अरूपो भूतवर्जनात्** भौतिकदेहवर्जनात् ॥ ॥ छ ॥

**इत्याकाशाधिकरणम्**

**असङ्गत्वं परमात्मन उक्तं** "अतमोऽवाय्वनाकाशमसङ्गमरसमि"त्यक्षरब्राह्मणे । **सुषुप्त्युत्क्रान्त्योर्भेदेन** ॥ असङ्गात्स्वापादिद्रष्टुरीश्वराज्जीवस्य **भेदव्यपदेशान्न जीवोऽसङ्गः** । अपितु **पर एवासङ्गः** । अथ च पराज्जीवस्य **भेदव्यपदेशान्न जीवः पर एव** सन् **असङ्गः** । अत्र हि "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरमेवमेवायं पुरुषः **प्राज्ञेने**"त्यादिना "तद्यथा नस्सुसमाहितमुत्सर्जंद्यायादेवमेवायं शारीर आत्मा **प्राज्ञेनाऽत्मने**"त्यादिना च सदृष्टान्तं भेदो व्यपदिश्यते । नचायमभिधीयमानो[1] जीवेशभेदो व्यावहारिक इति वाच्यम् । तदर्थानिरूपणात् । अनिर्वाच्यस्य निरस्तत्वात् । भेदस्य चाबाधात् । नच व्यवहारसम्बन्धित्वं व्यावहारिकत्वं, तथाऽव्यावहारिकस्यापि ब्रह्मणः सत्यत्वात् । अव्यावहारिकत्वे प्रतिवादिदूषितेऽपि ब्रह्मणि मूकतापत्तेरिति ॥ ॥ छ ॥

**इति सुषुप्त्यध्यधिकरणम्**

---

१ 'क'—मधीयमानो

**एष नित्यो महिमा ब्राह्मणस्येति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते। स च ब्राह्मणः स वा एष महानज आत्मेत्यजशब्दाद्विरिञ्चि इति प्राप्तम्। देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति। अतो ब्रवीति—**

**॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ ४३ ॥**

**सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेतीत्यादिशब्देभ्यो नित्यमहिमो विष्णुरेव ॥**

**उतामृतत्वस्येशानो यदन्नेनातिरोहति ।**

**सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि।**

**स योऽतोऽश्रुत इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥**

**॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥**

---

"पतिं विश्वस्याऽत्मेश्वरं शाश्वतमि"त्यादिना नित्यमहिमा परस्योक्तः। स **ब्राह्मणस्यापि प्रतीयते**। विरिञ्चस्य कादाचित्कपदप्राप्तेर्न नित्यमहिमेत्याशङ्क्याऽह— **देवानां चेति**। **चकारो**ऽवधारणे । अन्यदेवानामेव **विद्याकर्मणोः** सकाशात्**पदप्राप्तिः सूचिता** देवताधिकरणे न विरिञ्चस्य । तस्माद्विरिञ्चोऽपि नित्यमहिमेति प्राप्त आह— **पत्यादिशब्देभ्यः** ॥ पतिशब्दादीशानशब्दादग्राह्याश्रुतत्वादिशब्देभ्यश्च नित्यमहित्वेनोक्तो ब्राह्मणो **विष्णुरेव** । ब्रह्मणा वेदेन गम्यत इति 'ब्राह्मणः,' ब्रह्म अणति वाच्यत्वेनेति वा। अण गताविति धातोः। "**उतामृतत्वस्येशान**" इत्यादिना "पुरुष एवेदमि"ति प्रतिज्ञाते सर्वेशत्वे हेतुरुच्यते। अमृतस्य मुक्तस्यापीशानोऽयं पुरुष इति यत तस्मादिदं सर्वं पुरुष एव पुरुषाधीनमेवेत्यर्थः। नच सर्वस्य पुरुषैक्यमिहोच्यते । तथासत्यनिवृत्तेरयुक्तेश्च।

तस्मात्तदधीनत्वमेव प्रतिज्ञातम् । पुरुषेणैवेदं व्याप्तमिति वाऽर्थः । तथाच पैङ्गिश्रुतिरिमां श्रुतिं व्याचष्टे । "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेणैवेदं व्याप्तं यद्भूतं यच्च भाव्यं आतृणादाकरीषात्सर्वं भगवानिति मिथ्यादृष्टिरेषे"ति । "सर्वं समाप्नोषि ततोऽसि सर्व" इति च भगवद्गीतासु । **"यदन्नेनातिरोहती"**त्यन्नशब्दोक्तो मर्त्यस्संसारी । एतदत्रोक्तं भवति । मुक्तसमुदायस्यापीशो विष्णुः । यदयं संसारिसमुदायमत्यगात् । यद्ययं मुक्तिगानामनीशः स्यात्, नैव संसारिणः संसारान्मोचयेत् । मोचयति च, तस्मान्मुक्तानामपीश एव । "सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगादि"ति च भागवते । **अमृतत्वस्ये**ति धर्मधर्म्यभेदाभिप्रायेण । **अमृतत्वस्येशान** इति वाऽर्थः । मुक्तेरपि तदधीनत्वात् ॥ ॥ छ ॥

**इति ब्राह्मणाधिकरणम्**

**॥ इति तत्वदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ॥**

॥ श्रीः ॥



## ॥ चतुर्थः पादः ॥

विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे ॥

### ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ १ ॥

**तत्तु समन्वयादिति सर्वशब्दानां परमेश्वरे समन्वय उक्तः ।**
**तन्न युज्यते ।**
**यतोऽव्यक्तात्पुरुषः पर इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न ।**
**तस्यैव पारतन्त्र्याच्छरीररूपेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहितेः ।**
**कप्रत्ययः कुत्सने ॥**

---

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॥ "महतः परमव्यक्त**मव्यक्तात्पुरुषः पर**" इति काठकानां शाखायामव्यक्तशब्देन **प्रधानं** परिपठ्यते । तस्य महतः परत्वात्पुरुषादवरत्वाच्च । नह्यवरत्वं परस्य कयाऽपि विधया पश्याम इत्याशङ्का । परिहारभाष्यस्यायमर्थः । **तस्यैव** विष्णोः शरीररूपमव्यक्तम् । तदधीनत्वाच्छरीरमिव[1] रूपमस्येति शरीररूपं, नतु हरेश्शरीरत्वात्तस्येति शरीररूपमित्युक्तम् । नच शरीरकल्पनायोग्यं तदिति कप्रत्ययेन-

1 'क' 'ख'—शरीररूपमिव

**परमात्मन एवाव्यक्तशब्दः ।**
**तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याव्यक्तशब्दः ॥**
**तुच्छेनाऽभ्वपिहितं यदासीदिति दर्शयति च ॥**
**अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।**
**यो वेद हरिमात्मानं स भयादनुमुच्यत इति पिप्पलादशाखायाम् ॥**
**अक्षरं ब्रह्म परममित्युक्त्वाऽव्यक्तोऽक्षर इत्युक्त इति वचनाच्च ॥**

## ॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥

**सूक्ष्ममेव चाव्यक्तशब्देनोच्यते ।**
**तद्ध्यव्यक्ततामर्हति ॥**
**सूक्ष्मत्वं च मुख्यं तस्यैव ।**
**यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति ।**
**यत्तल्लोका न विदुर्लोकसारं विदन्त्येतत्कवयो योगनिष्ठा इति च पिप्पलादशाखायाम् ॥**

---

कुत्सयामास । तस्मिन्नव्यक्ते नियामकत्वेन वर्तमानो विष्णुरेवाव्यक्तशब्देन गृह्यते। **परमात्मन एवाव्यक्तशब्दो** मुख्यः । **तत्तन्त्रत्वेन** तदावरकत्वेन च **तच्छरीर रूपकत्वादितरस्याव्यक्तशब्दः** ।'तुच्छ'मल्पं गुणतः। परमापेक्षयाऽल्पत्वं प्रकृतेः । **आ** समन्ताद्भूमात्मकत्वा**दाभु** ब्रह्म । **यत्** ब्रह्म प्रकृत्या**ऽपिहितमासीत्** तदेव 'तपसो' ज्ञानस्य महत्तया प्रधानमासीत् । **अव्यक्त**मिति ज्ञातुमशक्यं, **अचलं** न चाल्यं, **शान्तं** पूर्णसुखं, **निष्कलं** षोडशकलावर्जितं, **निष्क्रियं** न क्रियत इति ॥ ॥ छ ॥

**सूक्ष्मं तु तदर्हत्वात्** ॥ सूक्ष्मं **ह्यव्यक्तततामर्हति** । सूक्ष्माः खलु परमाण्वाकाशादयोऽव्यक्ता लक्ष्यन्ते । **वैष्णवं पदं** विष्णुस्वरूपम् ।

"उत्तमानां हि पादेन सर्वरूपं हि कथ्यते ।
विष्णोः पदमिति ह्यस्मात्प्रथितिर्वैदिकी स्मृते"ति वैश्वानरविद्यायाम् ॥

**लोकसारं**—लोकोत्तमम् । **योगनिष्ठाः**—ब्रह्मणि मनोयोगनिष्ठाः ॥ ॥ छ ॥

---

१ 'क''ख'—दाभू

मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥

॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ॥
यदधीनो गुणोऽन्यस्य तद्गुणी सोऽभिधीयते ।
यथा जीवः परात्मेति यथा राजा जयीत्यपीति च स्कान्दे ॥

॥ ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥

अन्यस्य न वाच्यत्वं युज्यते ॥

॥ ॐ वदतीति चेन्न प्राज्ञो हि ॐ ॥ ५ ॥

महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत इति ज्ञेयत्वं वदतीति चेन्न ।
प्राज्ञः परमात्मा हि तत्रोच्यते ॥
अणोरणीयान्महतो महीयानिति तस्य हि महतो महत्त्वम् ।
सर्वस्मात्परमस्य महतोऽपि परत्वं युज्यते ॥

---

तदधीनत्वादर्थवत् ॥ तदधीनत्वाच्चाव्यक्तादेरव्यक्तपरावरत्वादिधर्माणां तस्यैवाव्यक्तत्वादि धर्मजातं मुख्यम् । अतस्तस्यैवाव्यक्तादिशब्दजातमर्थवत् । अव्यक्तस्थं तद्रूपमव्यक्तस्याप्यव्यक्तत्वं महतः परत्वं चाऽऽपादयतीति 'महतः परमव्यक्तमि'त्युच्यते । तदेव तस्य पुरुषादवरत्वं साधयतीत्यवरशब्दार्थः । नतु स्वयमवरत्वात् । यथाऽमृतत्वापादकत्वादमृतमित्युच्यते मृतिशीलत्वापादकत्वाच्च मृत्युरिति, एवम् ॥ "यथा जीवः परात्मेति" । अयमर्थः । यथा जीवगुणस्य प्राणधारणस्य परमात्माधीनत्वात्परमात्मा जीव इत्युच्यते "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्ये"त्यादौ । नतु तत्र संसारिप्रवेशविवक्षा । "तत्तेज ऐक्षत," "ता आप ऐक्षन्त," "इमास्तिस्रो देवता" इत्यादिना पूर्वमेव तत्र संसारिस्थित्यवगमात् । अनेनैव न्यायेन दुःखित्वादिशब्दा अपि परमात्मनि परममुख्यत्वेन व्युत्पादिता भवन्ति । स्वातन्त्र्यस्य प्रवृत्तिहेतोस्तत्रैव विद्यमानत्वात् ॥ ॥ छ ॥

ज्ञेयत्वावचनाच्च ॥ परमात्मनोऽन्यस्य न वाच्यत्वम् ॥ ॥ छ ॥

॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति तस्य ह्येतत्प्रकरणम्॥**

॥ ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥

**त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च ॥ अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयत इति वचनान्न विरोधः ॥**

॥ ॐ महद्वच्च ॐ ॥ ८ ॥

**यथा महच्छब्दो महत्तत्त्वे प्रसिद्धोऽपि परममहत्त्वात्परमात्मन एव मुख्य एवमितरेऽपि ॥**

---

इतश्च नान्यस्य वाच्यत्वम् । **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** ॥

"शान्तसङ्कल्पः सुमना यथा स्यात्
वीतमन्युर्गौतमो माऽभि मृत्यो ।
त्वत्प्रसृष्टं माऽभिवदेत्प्रतीतः
एतत्त्रयाणां प्रथमं वरं वृणे" इति नचिकेतसः **पितृसौमनस्य**प्रार्थनात्मकः **प्रश्नः** ।

"यथा पुरस्ताद्भविता प्रतीतः
औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीः शयिता वीतमन्यु-
स्त्वां ददृशिवान् मृत्युमुखात्प्रमुक्तमि"ति मृत्योरुत्त**रोपन्यासः** ।

"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो
प्रब्रूहि त्वं श्रद्दधानाय मह्यमि"त्यादि **स्वर्ग्याग्निप्रश्नः** ।

"प्र ते ब्रवीमि तदु मे निबोध
**स्वर्ग्यमग्निं नचिकेतः** प्रजानन्" इत्यादि**रुपन्यासः** ।

"येयं प्रेते विचिकित्सा मनुष्ये
अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहमि"त्यादि परमात्मप्रश्नः ॥

## ॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥

**यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति श्रुतेः शिरोवाचक एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्तीत्यादिश्रुतेः परमात्माभिधायका एव ।**
**अविशेषाच्छ्रुतेः ॥**

**॥ इत्यानुमानिकाधिकरणम् ॥**

---

"देवैरत्रापि विचिकित्सितं पुरा
नहि सुज्ञेयोऽणुरेष धर्म" इत्यादिरुपन्यासप्रपञ्चः ॥ अत्र मरणं मोक्षः, सर्वशरीरविरहात्मकत्वात्तस्य । एवं **त्रयाणामेव** प्रश्नोपन्यासौ चैवमेवोपपद्येते । नान्योपन्यासाङ्गीकारे । अथापि परादन्यस्य वाच्यत्वमापतितमिति चेन्न । **त्रयाणामेव प्रश्न उपन्यास**श्च **एवमेव** परमात्मन एव ज्ञेयत्वाङ्गीकार एव युज्यत इत्यभिप्रायात् । तथाहि—

"अविद्यायामन्तरे वेष्टयमानाः
स्वयं धीराः पण्डितम्मन्यमाना" इत्यादिनाऽन्यत्सर्वं विनिन्द्य—
"श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युरि"त्यादिना परमात्मानं तद्वक्तारं श्रोतारं ज्ञानं च पृथक्पृथक् प्रशस्य तत्स्वरूपमवर्णयत् । अत्रैव तात्पर्यप्रदिदर्शयिषयैवान्यदप्यभिधाय विनिनिन्द । निन्दनार्थमप्यन्यस्य वाच्यत्वमनुज्ञातमिति चेत्सत्यमधिकारिभेदापेक्षया । "सर्वे वेदा यत्पदमामनन्ती"तीहैव चान्यस्यावाच्यत्वं प्रतिज्ञायते । ॥ छ ॥

**चमसवदविशेषात्** ॥ उपचारच्चमसत्वमेव शिरसो न मुख्यत इति चेन्न । श्रौतस्य चमसशब्दस्याबाधितविषयस्य मुख्यार्थपरित्यागे कारणाभावात् ॥ छ ॥

**इत्यानुमानिकाधिकरणम्**

**वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिकर्माभिधायकस्य क्रमादिविरोधान्न युज्यत इत्यत आह—**

**॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥**

**ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव ।**

**एष इमं लोकमभ्यार्चदित्युपक्रम्य ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यादिति ह्यधीयत एके ॥**

---

**वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिकर्माद्यभिधायकस्य** पदकदम्बकस्य प्रत्येकं ब्रह्मवाचकत्वं **न युज्यते** । कर्तृकरणकर्मक्रमादि वचनविरोधात् । मुख्यत एकस्योभयार्थत्वासम्भवेन तद्वचनाभावे कृत्यनुष्ठानलोपप्रसङ्गादित्यत आह—**ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** ॥ ज्योतिष्टोमादिकर्मकर्तृकरणादीनामशेषाणां पदार्थानां **वाचकत्वेन प्रसिद्धशब्दानामभिधेयोऽपि स एव** । यथा चायं सर्वशब्दवाच्यो भवति तथा **ह्यधीयत एके** शाखिनः प्रश्नद्वकोपक्रमादेवाऽरभ्य । [1]अयं श्रुत्यर्थः—**एष** परमात्मा **इमं** देहं **लोकं** जीवान्तर्यामिरूपेणा**भ्यार्चत्** । य एष आदित्यस्थस्तपति, "यश्चासावादित्ये" "अथ य एषोऽन्तर आदित्ये हिरण्यश्मश्रुः" "येनाऽदित्यस्तपति तेजसा भ्राजसा च" "यदादित्यगतं तेज" इत्यादि श्रुतिस्मृतिभ्यो विष्णुरेव हि तत्रस्थस्तपति । सर्वप्रणेता ह्येष यस्तपति । शतं वर्षाणि तं लोकमभ्यार्चदिति यत्तस्माच्छतर्चिन इत्याचक्षते विद्वांसः । एतमेव शतर्चिनः सन्तं शतर्चिन इत्याचक्षते न त्वन्यानिति । एवमन्यनामान्यपि परमात्मनि पृथक्पृथङ्निरुच्य पुनस्सर्ववेदप्रभृतयः समद्घोषान्ताः शब्दाः एकविषयैव **व्याहृतिः** । सा च सर्वप्रणेतृपरमात्मविषयैवेति **विद्यादिति** सतात्पर्य-

---

**१ समग्रा चेत्थमानुपूर्वी—**

**"एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति । प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तमि"त्यादिः ॥**

**॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ११ ॥**

**मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशान्न कर्मक्रमादिविरोधः ॥**

**॥ इति ज्योतिरधिकरणम् ॥ १ ॥**

**॥ ॐ न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥**

**यस्मिन्पञ्च पञ्च जना आकाशश्च प्रतिष्ठित इत्यादिषु बहुसङ्ख्योपसंग्रहेऽपि न विरोधः ।**

---

**मधीयते** । निखिलपदानां तद्वाचकत्वपदवी तु गुरुभिरेवोपसन्दर्शयितुं सुशकेति नास्माभिरत्र प्रयत्यते । दर्शिता च सा भङ्गी भगवतैवानुव्याख्याने—

"जातमोतं हरौ यस्माज्ज्योतिः पः प्राणरूपतः ।
आयजेतश्चायजेतो वसन्तिश्च वसंस्ततः" इत्यादिका ॥ ॥ छ ॥

कर्मक्रमादिविरोधं परिहरति **कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥** "असौ वा आदित्यो देवमधि"त्याद्यायां मधुविद्याश्रुतौ यथा मधुशब्दार्थत्वेनाऽदित्यस्थो विष्णुः कृत उपदिश्यते । मधुगुणानां तत्राधिक्यात्तस्यैव च परममुख्यमधुत्वं भवति । नच तावता प्रसिद्धमधुनि व्यवहारलोपो लोकानां भवति । एवमेव सर्वशब्दानां परममुख्यार्थत्वेन कृतिर्विष्णौ वेदेनोपदिश्यते । सा च कल्पना प्रबलाऽनादित्वात्, विद्वत्सम्बन्धित्वाच्च । तथाच श्रुतिः "कश्छन्दसां योगमावेद धीर" इत्यादिका । अविद्वदपेक्षया कल्पनेत्युच्यते । मुख्यातिमुख्यवृत्तिभेदेन च वाच्यद्वयसम्भवो न दण्डवारितः । कृष्णादिशब्देषु तद्दर्शनात् । तस्मान्न व्यवहारलोपः ॥ ॥ छ ॥

**इति ज्योतिरधिकरणम्**

**न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च** । **"यस्मिन् पञ्च पञ्च जना" इत्यादिषु** बहुसङ्ख्ययोपसंगृहीतत्वादन्य एवोच्यन्ते, न विष्णुः । तस्यैकस्य

**तस्यैवाऽकाशादिषु नानाभावात्तदतिरिक्तस्वरूवपत्त्वाच्च ॥**
**पञ्च पञ्च जनानाह—**

**॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १३ ॥**

**प्राणस्य प्राणमुत चक्षुपश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन इति वाक्यशेषात् ॥**

**॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥**

**तद्देवा ज्योतिषां ज्योतिरित्यनेन काण्वानां पञ्चत्वम् ॥**

**॥ इति पञ्चजनाधिकरणम् ॥ ३ ॥**

**अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति—**

**॥ ॐ कारणत्वेन चाऽकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥ १५ ॥**

---

बहुत्वासम्भवात्, **"यस्मिन्नि"**ति विष्णावुपसंग्रहाच्च, तेषां बहुसङ्ख्यानां न विष्णुत्वमिति न मन्तव्यम् । **तस्यैव** विष्णोराकाशे जनेषु च स्थितानां बहुरूपाणां **भावात्** । **"यस्मिन्नि"**ति तेषामधिकरणत्वेन **तदतिरिक्तस्वरूपवत्त्वाच्च** । न **चैकस्य** बहुत्वविरोधः । विशेषादेवोपपत्तेः । ॥ छ ॥

**पञ्च पञ्चे**ति वीप्सा प्रतिशरीरं पृथक्पृथगवस्थितिसन्दर्शिका । जनानां **जन**यितृत्वाज्जनाः ॥ **प्राणादयो वाक्यशेषात्** ॥ प्राणादिस्थानि प्राणादिप्रेरकाणि प्राणादिनामकानि तद्रूपाणि **पञ्च पञ्च जना** इत्युच्यन्ते ॥ ॥ छ ॥

**ज्योतिषैकेषामसत्यन्ने** ॥ ज्योतिषां भासकेन तच्छब्दवाच्येन **काण्वानां** शाखिनां पञ्चत्वपूर्तिः । तत्रान्नाभावात् ॥ ॥ छ ॥

**इति पञ्चजनाधिकरणम्**

"आत्मन आकाशः सम्भूतः । आकाशाद्वायुरि"त्यादाववान्तरकारणादीनामाकाशादीनामुत्पत्तिरुच्यते । परस्य तदसम्भवात्तच्छशब्दवाच्यत्वं न युक्तमि-

**आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः ।**
**यथाव्यपदिष्टस्यैव परस्य य आकाशे तिष्ठन्नित्यादिनाऽऽकाशादिषूक्तेः॥**

**॥ इत्याकाशाधिकरणम् ॥ ४ ॥**

**सर्वशब्दानां परमवाचकत्वे कथमन्यत्र व्यवहार इत्यतोऽब्रवीत्—**

**॥ ओँ समाकर्षात् ओँ ॥ १६ ॥**

**परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ॥**
**परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।**
**व्यवह्रियन्ते सततं लोकवेदानुसारत इति हि पाद्मे ॥**
**तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः--**

**॥ ओँ जगद्वाचित्वात् ओँ ॥ १७ ॥**

**जगति हि व्यवहारो लोकस्य । नतु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् ॥**

---

त्यत आह —**अवान्तरकारणत्वेनापी**त्यादि । आकाशादिषु वाय्वादीना**मवान्तरकारणत्वेना**ऽकाशादिशब्दवाच्यः **स एव स्थितः** ॥ "स योऽतोऽश्रुतः" "एष आत्मेति होवाचैतदमृतमि"त्यादौ यत्प्रकारः परो व्यपदिष्टः तत्प्रकारस्यैव **परस्य य आकाशे तिष्ठन्नि**त्यादिवाक्यै**राकाशादिषु** स्थितत्वेनोक्तत्वात् । नचोत्पत्तिश्रुतिविरोधः । आकाशादिस्थरूपाद्वाय्वादिस्थरूपस्य व्यक्तेर्विवक्षितत्वात् ॥ ॥ छ ॥

**इत्याकाशाधिकरणम्**

ब्रह्मण एव वाचकैः सर्वशब्दैः **कथमन्यत्रा**वाच्येषु व्यवहरन्ति । अवाचकैरेव व्यवहारे कुम्भादावपि स्तम्भादिशब्दव्यवहारयोगादव्यवस्था स्यात् । अतो न वाचकत्वमन्तरेण जगति **व्यवहारः** सार्वजनीनस्सम्भवतीत्यत आह—**समाकर्षात्** ॥ अनादिकालत एवाविच्छेदेन परमात्मवाचकत्वेन स्थितास्ततः **समाकृष्येतरेष्वपि व्यवह्रियन्ते** । नचाव्यवस्था । समाकर्षकृतेर्विद्यमानत्वात् ॥ ॥ छ ॥

## ॥ ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥ १८ ॥

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् ।
तज्जीवमुख्यप्राणयोर्लिङ्गम् ।
अथ यां जीवो जहाति सा शुष्यति, वायुना हि सर्वे लोका नेनीयन्त इत्यादिश्रुतिभ्य इति चेन्न ।
उपासात्रैविध्यादिति व्याख्यातत्वात् ॥

## ॥ ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १९ ॥

परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः ।
कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये ।

---

कथं तर्हि तेषां जगति वाचकत्वप्रसिद्धिरित्यत आह—जगद्वाचित्वात् ॥ ॥ छ ॥

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् । तदधीनत्वादव्यक्तादीनामव्यक्तत्वादेः स्वभावस्याव्यक्तादिशब्दवाच्यत्वं मुख्यतस्तस्यैव विष्णोरित्युक्तम् । एवं च तत्तत्स्वातन्त्र्यं तत्तच्छब्दवाच्यत्वे लिङ्गं भवति । तल्लिङ्गं जीवमुख्यप्राणयोरस्ति । "अथ यां जीवो जहाति सा शुष्यति," "वायुना ही"त्यादिश्रुतिभ्य इति चेन्न । तल्लिङ्गस्य तद्भगवदधीनत्वेन[1] व्याख्यातत्वात् ॥ ॥ छ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके । परमात्मज्ञानार्थमेव कर्मसृष्ट्यादिकमपि वदति श्रुतिरिति जैमिनिर्वक्ति । यस्य ज्ञानादन्यज्ज्ञातं भवति तत्किमिति शौनकप्रश्नार्थं एकविज्ञानस्य प्राधान्यावगमात्तदर्थमन्यदुच्यत इति गम्यते[2] । अङ्गिरसो व्याख्यानेऽपि "द्वे विद्ये वेदितव्ये इति

---

१ 'ख'—तद्गतभगव—
२ 'ग'—अवगम्यते ।

**कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेनेत्यादिप्रश्नव्याख्यानाभ्याम् ॥**
**एवमपिचैके पठन्ति—**
**यस्तन्न वेद किमृचा करिष्यतीति ॥**

**॥ ॐ वाक्यान्वयात् ॐ ॥ २० ॥**

**वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ॥**

---

ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा चे"त्यादौ ब्रह्मज्ञानस्य परविद्यात्वोक्तेस्तस्य च परत्वोपपादनार्थमन्यदुच्यत इति गम्यते । "**कथं नु भगवः स आदेशो भवती**"ति श्वेतकेतुप्रश्नेऽपि "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती"ति प्राधान्येनोक्त आदेशः परामृश्यते । आदिश्यत इत्य**आदेशः** परमात्मा । "**यथा सोम्यैकेन** मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्यादावुद्दालकव्याख्यानेऽपि सादृश्यात्प्राधान्याच्चैकविज्ञानेन सर्वविज्ञानं निर्दिश्य "एवं सोम्य स आदेश" इति तस्यैव सर्वतः प्राधान्यावधारणात्तद्बोधनार्थमन्यदुपन्यस्यत इति गम्यते । न केवलं **प्रश्नव्याख्यानाभ्यां** लिङ्गाभ्यामेतदवगम्यते । **एवं** मुखतोऽप्ये**एके** शाखिनः **पठन्ति**—"**यस्तन्न वेद किमृचा करिष्यती**"**ति** । **यस्त**द्विष्ण्वाख्यमक्षरं **न वेद** स **ऋचा**ऽधीतयाऽध्यापितयाऽधिगमितार्थयाऽनुष्ठितार्थयाऽनुष्ठापितार्थया वा **किं करिष्यति** । तद्वेदनेनैव हि तत्प्रयोजनं, उत्कृष्टफलत्वादित्यर्थः । **च**कारादेतदुपसंहर्तव्यं, एतदर्थं सृष्ट्यादिकमप्यधीयते "सप्तार्द्धगर्भा" इत्यादीति ॥ ॥ छ ॥

**वाक्यान्वयात्** ॥ एवमङ्गीकारे यद्यपि पदानामेकैकशो नान्वयः **परमात्मना**[1] । तथाऽपि **वाक्यस्यान्वयो युज्यते** स्वं स्वमवान्तरार्थमुक्त्वा **स्थितस्यापि**। यस्मादपूर्णफलत्वान्मिश्रफलत्वाच्च अवरं कर्म, उत्पत्त्यादिना पारतन्त्र्याद्देवादिकः प्रपञ्चोऽप्यप्रधानः, तस्मात्सर्वतः परमत्वेनाऽऽत्मनि ज्ञानं कर्तव्यमिति वाक्यान्वयस्तत्तत्प्रकारेण वक्ष्यमाणेष्वपि मतेषु योजनीयः । प्रधानाधिकारिविवक्षया सकल-

---

१ 'क''ख'—परमात्मनः

**॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥**

**नान्यः पन्था अयनाय विद्यत इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः ।**
**यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥**

**॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ २२ ॥**

**उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन ।**
**अतस्तदुक्तीत्यौडुलोमिर्मन्यते ॥**

**॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥**

**सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ॥**
**कृष्णद्वैपायनमतादेकदेशविदः परे ।**
**वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चनेति पाद्मे ॥**

**॥ इति समाकर्षाधिकरणम् ॥ ५ ॥**

---

पदस्वरादिसमन्वयं समभिवदन्वेदपतिरन्याधिकारिविशेषविवक्षया स्वमतान्यपि जैमिन्यादिभिरिदमादीन्यवादयत् । तदेव चाऽवेदयिष्यति—

"**कृष्णद्वैपायनमतादेकदेशविदः पर**" इत्यादि ॥ ॥ छ ॥

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** ॥ "एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति । इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति" "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायादि"त्याद्युक्तप्रकारेणा**न्यदनित्यफलमि**ति **यत्तस्मान्नान्य** उपायो भगवत्प्राप्तिरूपायामृतत्वायेति ॥ ॥ छ ॥

**उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः** ॥ संसारादुत्क्रमणेच्छोस्तत्**साधन**भूतज्ञान**साधनत्वेन कर्मादिना भाव्यम्** । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति श्रुतेः ॥ ॥ छ ॥

**अवस्थितेरि**ति नैक्यमुच्यते । नह्यवस्थितिशब्दस्तद्वाचकः ॥ ॥ छ ॥

**इति समाकर्षाधिकरणम्**

**स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—**

**॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ २४ ॥**

**हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशंत्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्तीति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥**

**॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥**

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**
**महामायेत्यविद्येति नियतिर्मोहिनीति च ।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यत इति वचनात्तदभिध्यैव प्रकृतिशब्देनोच्यते ॥**

**सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द इति श्रुतेरभिध्या च स्वरूपमेव ॥**

**ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।**
**परमैश्वर्ययोगेन विरुद्धार्थतयेष्यत इति ब्रह्माण्डे ॥**

---

यद्यपि परत्वावरत्वादिकमपेक्षाभेदादेकत्र युगपदुपलभ्यते । एकब्रह्मभावः कार्यकारणभावश्च कथञ्चिद्युज्यते । न तथा स्त्रीपुम्भावो युगपदेकत्र दृष्टः । तस्मान्न स्त्रीशब्दाभिधेयः परमपुमानित्यत आह—**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ **स्त्रीशब्दा अपी**त्यादिभाष्योदितः **प्रकृतिश्चे**ति चकारार्थः । न केवलं प्रकृतिशब्देनैव वाच्य इत्युच्यते । स्त्रीशब्दानां सर्वेषामपि वाच्य एवेति । "**पुरुषमभिविशन्ती**"ति । मुख्यवाचकत्वेन विशन्तीत्यर्थः । **अभिवदन्तीति** प्रतिज्ञातत्वात् ॥ छ ॥

**अभिध्योपदेशाच्च** ॥ अभिध्यायाः प्रकृतित्वोपदेशात्स्वरूपत्वोपदेशाच्च प्रकृतिशब्दवाच्यत्वं विष्णोर्युक्तम् । **जूतिः** प्रेरणा । युज्यते च सुखसुख्यादिभाव ईश्वरस्य, स्वरूपस्वरूपिभाववत्प्रदेशप्रदेशिभाववच्च । यथाहीश्वरः परमाणुना सम्बध्यमानस्तादृशेनैव प्रदेशेन सम्बध्यते, नभसा सम्बध्यमानस्तु तादृशेनैव स्वरूपेण । नच तयोः प्रदेशप्रदेशिनोः परस्परभेदः । तत्स्वरूपस्याव्याप्तिप्रसक्तेः । अत एकस्यैवोभयात्मकत्वमिति । एतेनैतदपास्तम् । यदास्माकीनमीश्वरमनीश्वराः

१ 'क'—देकस्य

## ॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥

**एष ह्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्धिश्वरूप इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥**

## ॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥

**प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च ॥**
**प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामेषु स्थित्वाऽऽत्मनो बहुधाकरणात् ॥**
**अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽत्मानं बहुधा चकार । तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षत इति भाल्लवेयश्रुतिः ॥**
**अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।**
**अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयत इति नारदीये ॥**
**नचान्यत्कल्प्यमप्रमाणत्वात् ॥**

---

सेश्वराश्च समयिनः सावयवत्वादनित्यमव्यापिनमुपपादयन्ति । सप्रदेशस्येव[1] सावयवस्यापि तस्य नित्यत्वव्यापित्वोपपत्तेः । कथं नु खल्विमे प्रदेशविशेषाननन्तानात्मनस्संवदमाना नावयवान् संवदेरन् । नहि वयमपि भिन्नावयवानीश्वरस्य ब्रूमः । प्रदेशविशेषवत् स्वरूपभूतानेवेति ॥ ॥ छ ॥

**आत्मकृतेः परिणामात्** ॥ **प्रकृतावनुप्रविश्ये**त्यादेरयमर्थः । आत्मीयायाः प्रकृतेः परिणामात् **तत्परिणामेषु** नियन्तृत्वेन **स्थित्वाऽत्मनो, बहुधाकरणा**त्प्रकृतिरित्युच्यते । 'बहुधाकरणं' बहुधाव्यञ्जनम् । तस्माच्च विष्णुरेव प्रकृतिशब्दवाच्यः ॥

अत्राऽहुः—प्रकृतिशब्देनोपादानकारणं ब्रह्मात्र प्रतिपाद्यते । "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति प्रतिज्ञादृष्टान्तानुपरोधादिति । अत आह—**नचान्यत्कल्प्यमप्रमाणत्वा**[2]**दिति** ॥ **नोपादानत्वं**

---

१ 'क''ख''ग'—सप्रदेशस्यैव
२ 'ग'—मप्रमाणकत्वा–

**कल्प्यं**, ब्रह्मणो जगदुपादानत्वे प्रमाणाभावात् । नच "बहु स्यां प्रजायेये"ति श्रुतौ जगदात्मतया बहुभावाभिध्यानमभिधीयते । "तत्सृष्ट्वा तदेवानुप्राविशदि"ति "इमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्ये"ति च वक्ष्यमाणस्य तत्र तत्र प्रवेशस्यैवाभिध्यातत्वात् । "प्रजायेये"ति प्रजनयेयेत्यर्थः । अपरथा पौनरुक्त्यप्रसङ्गात् । "तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यादिवाक्यादपि न ब्रह्मणो जगद्भाव आशङ्कनीयः । पूर्वसृष्टे पश्चात्प्रविष्टस्य तद्भावायोगात् । "अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिरि"ति चाविकारित्वे श्रुतिः । ब्रह्मोपादानत्वे च जगतश्चेतनत्वप्रसङ्गः । मृदुपादानको हि घटो मृदात्मको लक्ष्यते । अतो नात्र प्रमाणम् । सूत्रमत्र प्रमाणमिति चेत्, **नै**तदुपादानत्वं सूत्रार्थतया **कल्प्यम्** । प्रमाणाभावात् । **न**ह्यस्मिन्नध्याये सति सम्भवे समन्वयादन्यत्कल्प्यम् । समन्वयसूत्राणामन्यत्राप्रमाणत्वात् ।

अन्यस्तु मन्यते, न मृदादिवदुपादानत्वमिष्यते, किन्तु शुक्त्यादिवद्रजतादेरपरिणामेनैव । नच तावता तदुपादानभावाभङ्गः प्रसङ्गी । यथा हि शुक्त्यविद्याविजृम्भितत्वाद्रजतस्य शुक्त्युपादानता कल्प्यते[1] तथा ब्रह्माविद्याविजृम्भितत्वाज्जगतस्तदुपादानतेति । अत्रापि तदुत्तरं -**नचान्यदुपादानं कल्प्यम्** । प्रमाणरहितत्वात् । नहि शुक्तेः रजतोपादानत्वम् । नहि रजतार्थी शुक्तिकां विदन्नुपादत्ते[2], मृदमिव मणिकार्थी । नैतावन्तं कालमपि रजतमिहाऽसीत्, असदेव सदिति प्रत्यभादिति चोत्तरकालीनस्सार्वलौकिकः प्रत्ययस्तस्योत्पत्तिं निवारयति । कथं च पुनस्तदनवबोधजं तज्जमभिनिविशसि । तस्य ततो भेदरहितत्वादिति चेत्तर्हि कथं तिष्ठति तस्मिन्नितरस्यापगमः? अनिर्वाच्यत्वादिति चेन्नैवम् । ब्रह्मणोऽप्यनिर्वाच्यत्वप्रसङ्गात् । नहि स्वतो भेदविरहिणः स्वयं भेदि स्यात् । नाप्यभेदविरहितादभेदि स्यात् । परिशेषादनिर्वाच्यं ब्रह्म स्यात् । विद्यया च विपद्येत । प्रथमं ब्रह्मणः प्रकृतित्वं कल्पयित्वा ततस्तदज्ञानस्य कल्प्यत इति च

१ 'क' 'ख' 'ग'—कथ्यते

२ 'ग'—विन्दन्नुपादत्ते

कष्टेयं कल्पना । **नच** तदपि **कल्प्यं, अप्रमाणत्वात्**[1] ॥ प्रतिज्ञादृष्टान्तानुपरोधादेवमाश्रीयत इति चेत्, तदप्ययुक्तम् । यदि हि श्रुतौ जगदुपादानत्वमभिप्रेष्यत दृष्टान्तोऽपि तर्हि तादृगुदाहरिष्यत । नहि निखिलमृण्मयं कार्यजातं घटकरकमणिकमल्लकशरावोदञ्चनादिकमेकमृत्पिण्डविकारो भवति । विकारविवक्षायां तु मृदा विज्ञातयेत्येवावक्ष्यत, एकशब्दः पिण्डशब्दश्च व्यर्थः स्यात् । "वाचाऽऽरम्भणं विकार" इति विकारस्य मिथ्यात्वमुक्त्वा मृत्तिकायाः सत्यत्ववचनात्प्रकृतिविकारभावविवक्षेति चेन्न । नहि वाचारम्भणशब्दो मिथ्यार्थे प्रसिद्धः । वाचाऽस्तीत्यारभ्यत एव केवलं न तथा युक्तितो वक्तुं शक्यते । अतो वाचारम्भणमिति चेन्न । परमार्थापेक्षया निर्वाच्यमित्यपि वक्तुमशक्यत्वात् । शक्यत्वे मोक्षे च तदनुवृत्तिप्रसक्तेः । वाचारम्भणमात्रमिति चाश्रुतकल्पना । नामधेयमात्रमिति च पुनरुक्तिः । अस्मिन्पक्षे "मृत्तिकैव सत्ये"ति वक्तव्य इतिशब्दो लिङ्गव्यत्यासश्च व्यर्थः स्यात् । नच सत्यज्ञानान्मिथ्या ज्ञातं भवति । अधिष्ठानज्ञानादध्यस्तस्य निवृत्तेरेवेष्टत्वात् । कथं च विकारभावादेव मिथ्यात्वं सम्प्रतिपद्येत? विनाशित्वेनेति चेन्मैवम् । बाधादेव मिथ्यात्वप्रतिपत्तेः । अत एव हि रजतादिदृष्टान्त उपादित्सितः । नच घटादेर्बाधः । तस्मान्नायं मिथ्यात्वे दृष्टान्तः ॥ किन्तु "यथा सोम्यैकेने"ति सादृश्यादेकविज्ञानेन सर्वविज्ञानं निदर्शयति । "वाचारम्भणमि"त्यादिना प्राधान्यात् । वाचारम्भणं विकारात्मकं तस्मादनित्यम्[2] । सारम्भा वाच इत्यर्थः; धर्मधर्म्यभेदात्, साङ्केतिकनामानीत्युक्तं भवति, तान्यनित्यानि । मृत्तिकेति नामधेयमेव सत्यं सततप्राप्तं सदातनं वा, नित्यमित्यर्थः । साधुगुणं प्रधानगुणं प्रधानमिति[3] चोक्तं भवति । प्रधानज्ञानादप्रधानमपि ज्ञातं भवतीति च लोकव्यवहारः ॥ तस्मान्नात्र प्रकृतिविकारभावो विवक्षित इति न ब्रह्मणो जगदुपादानत्वम् । तस्मात्सुष्ठूक्तं **नचान्यत्कल्प्यमप्रमाणत्वादिति**[4] ॥ ॥ छ ॥

---

१ 'ग'-- अप्रमाणकत्वात् । २ 'क'—दनित्यत्वम् ।

३ 'ग' —साधुगुणं प्रधानमिति ४ 'ग'—मप्रमाणकत्वा—

## ॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम् ।
तच्चास्यैव हि गीयते यद्भूतयोनिं परिपश्यन्ति धीरा इति ॥
व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।
सूतिमव्यवधानेन स्त्रीत्वमाहुर्मनीषिणः ॥
उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत इति ब्रह्माण्डे ॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

## ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः ॥
एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्चेति हि महोपनिषदि ॥
शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् ।
तस्माच्छून्यमिति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥
नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः ।
अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥
सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता ।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिरिति कौर्मे ॥
एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन ॥

---

सततरमणात्स्त्री ॥ ॥ छ ॥

### इति प्रकृत्यधिकरणम्

**एतेन सर्वे व्याख्याता व्याख्याताः** ॥ एतेनावशिष्टाः **सर्वे शब्दा** ब्रह्मवाचकत्वेन **व्याख्याता** वेदितव्याः । तुदति च्छन्न इति **तुच्छः** । न आश्यत इति **नाशः** । **तदधीनत्वा**दीत्यादिशब्दात् "महद्वच्च" "चमसवदविशेषात्" "ज्योति-

**अवधारणार्थं सर्वस्याप्युक्तस्याऽध्यायमूलतः ।**
**द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णय इति वाराहे ॥**

**॥ इति सर्वव्याख्यानाधिकरणम् ॥ ७ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये**
**प्रथमोऽध्यायः ॥ १ ॥**

---

रुपक्रमात्तु तथा ह्यधीयत एक" इत्यादि द्रष्टव्यम् । तस्मादेवमुक्तन्यायैरनन्तवेद-वाक्यपदवर्णस्वराभिधेयत्वादनन्तगुणगणपरिपूर्णो नारायण इति सिद्धम् । तथाच ब्रह्माण्डे––

"अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।
पृथङ्नामानि यस्मात्तद्गुणानेव प्रचक्षत" इति ॥ ॥ छ ॥

**इति सर्वव्याख्यानाधिकरणम्**

**इति तत्त्वदीपिकायां प्रथमोऽध्यायः ॥**

॥ श्रीः ॥

## ॥ अथ द्वितीयाध्यायः ॥



### ॥ प्रथमः पादः ॥

उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन ।
प्रथमपादे युक्त्यविरोधम् ।
प्रथमतः स्मृत्यविरोधं दर्शयति—

**॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥**

**सर्वज्ञा हि रुद्रादयः ।**

---

प्रथमाध्याये सर्वसृष्ट्यादिकर्तरि सर्वगुणपरिपूर्णे नारायणे सर्ववेदसमन्वय उक्तः । तत्र **अविरोधं दर्शयत्यनेनाध्यायेन** । विदितेऽपि वेदार्थे विरोधस्फुरणे तत्वनिर्धारणानुपपत्तेः । अनिर्धारिते च निदिध्यासनायोगात् । अनाध्यातस्य चानीक्षणीयत्वेनामोचकत्वात् । अतो यावन्न विरोधपरिहारस्तावन्न पुमर्थपर्यवसायित्वं[1] शास्त्रस्येति तत्तद्विरोधमाशङ्क्य परिहरति ॥ **प्रथमपादे युक्त्यविरोधं दर्शयति** । तदायत्तत्वात्सर्वविरोधाविरोधयोः । **प्रथमतो** रुद्रादि**स्मृत्यविरोधम्** । तासां श्रुतिमूलत्वेन सर्वज्ञवक्तृकत्वेन[2] चाऽभिमतानां क्वापि इष्टफलानां वेदसमत्वबुद्ध्या जगत्कारणे समन्वयधर्मित्वेन समाशङ्कनीयत्वात् । **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॥ **सर्वज्ञा हि** रुद्रकपिलकणादादयः ।

---

१ 'ग'—पुरुषार्थ—
२ 'ग'—युक्तिमूलत्वेन

**अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेन्न ।**
**अन्यस्मृतीनां विष्ण्वादिभिर्नितरां सर्वज्ञैरेव कृतत्वाच्छ्रुतेराधिक्यं च सिद्ध्यति ॥**

**॥ ॐ इतरेषां चानुपलब्धेः ॐ ॥ २ ॥**

**इतरेषां च तासु स्मृतिषूक्तानां फलानां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम् ।**
**चशब्देन भगोपलब्धिरङ्गीकृता ॥**

**॥ ॐ एतेन योगः प्रत्युक्तः ॐ ॥ ३ ॥**

**योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम् ।**
**उक्ताभ्यासे तत्काल एव फलादृष्टेः ॥**

**॥ इति स्मृत्यधिकरणम् ॥ १ ॥**

---

ते च जगत्कारणमन्यदन्यन्मन्यन्ते । नच तत्स्मृतीनामन्योऽवकाशः । उक्तार्थे श्रुतेः प्रामाण्याङ्गीकारे तासां तत्तदुत्कर्षप्रतिपादिकानामन्यावकाशरहितानामप्रामाण्यदोषः प्रसज्येत । नच तद्युक्तं सर्वज्ञप्रणीतानाम् । **अतः** श्रुतेस्तत्र**प्रामाण्यमिति चेन्न** । तेभ्योऽधिकं निरतिशयं सर्वज्ञत्वं विष्णोः । मन्वादिनां च कपिलादिभ्योऽधिकम् । अतो विष्ण्वादिस्मृत्यनवकाशदोषोऽप्युल्बणस्तत्प्रामाण्याङ्गीकारे प्रसज्यते । अत एतद्विरोधे तासामप्रामाण्यमेव स्यात् । अन्यसमग्रेभ्योऽस्माकं श्रुतिप्रामाण्यमधिकं निरपवादं सिद्ध्यति ॥ ॥ छ ॥

**इतरेषां चानुपलब्धेः** ॥ **इतरेषां** दृष्टोक्तानां **फलानां** प्रत्यक्षतोऽनुपलब्धेरदृष्टोक्तानां चानुदयनिर्णयः स्यात् । यद्यपि यत्र क्वापि यथोदितं तदुपलभ्यते । तथाऽपि नादृष्टार्थप्रवृत्तिः स्यात् । व्यभिचारदर्शनात् ॥ ॥ छ ॥

एवमपि योगशास्त्रोदितानां प्रस्वेदकम्पादिदृष्टफलानामुपलभ्यत्वात्तत्प्रमाणमित्यत आह -- **एतेन योगः प्रत्युक्तः** ॥ योगशास्त्रोदित**योगा**भ्यास**फलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम्** । यथोक्ता**भ्यासे** कृते यथोक्त**काल एव** तत्तत्**फलादृष्टेः** ॥ ॥ छ ॥

**इति स्मृत्यधिकरणम्**

**॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ ४ ॥**

**नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम् ।**
**विलक्षणत्वात्—नित्यत्वात्तदनुसारित्वाच्च ।**
**नहि नित्ये दोषाः कल्प्याः ।**
**स्वतश्च प्रामाण्यम् ।**
**अन्यथाऽनवस्थितेः ।**

---

परसमयसाधारणसमीरितमेतमेव दोषं स्वसमयेऽपि समानं समाशङ्क्यमानमपनोनुद्यते । **न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॥ नचेतरस्मृतिवद्वेदस्योक्तफलोपलम्भ एव प्रामाण्यम् । **नित्यत्वात्** । पुंवाक्ये विप्रलम्भादिदोषाः सम्भवन्ति । **न** नित्यवाक्ये ते **कल्प्याः** । प्राप्त्यभावात् । नित्यवाक्यप्रामाण्यानङ्गीकारे धर्माधर्माद्यसिद्धिरिति चावादिष्म । **स्वतश्च प्रामाण्यम**ङ्गीकर्तव्यम् । परतश्चेत्तस्यापि परत इत्यनवस्था । नच नित्यप्रमाणस्य प्रामाण्यं परतो भवितुमर्हति । कदाचिदप्रामाण्ये सदा तथात्वप्रसङ्गात् । ननु स्वतः प्रामाण्यवादिनामपि वेदे दोषाभावः प्रमाणान्तराज्ज्ञायते । तदप्यदोषमेव दोषाभावे प्रमाणम् । तददोषत्वमन्यसाध्यमित्यनवस्था तत्रापि तुल्येति । नायं दोषः । साक्ष्यवधित्वाद्दोषाशङ्कायाः । यत्र हि साक्षी निर्दोषत्वं निश्चिनोति, न तत्र दोषशङ्का स्यात् । नच साक्षिणो दोषः कल्प्यः । तदनुभूतस्यानन्यथात्वनियमात् । **अन्यथा** प्रमाणाप्रमाणविवेकाभावप्रसङ्गात् । नच साक्षिनिर्दोषत्वज्ञानं मानान्तरापेक्षम् । स्वसंवेद्यत्वात्तस्य । तस्मान्नास्मत्पक्षेऽनवस्था ॥

नन्वस्मत्पक्षेऽपि प्रमाण्यशङ्कानुत्पत्तौ न मानान्तरापेक्षेति नानवस्थेति चेत्किमाशङ्कानिवारकम्? यया शङ्कया व्याहतिः स्यात्सा नैवोत्पद्यते, तस्माद्व्याघातो निवारकः, तदवधिरेवाऽऽशङ्का स्यात्, अतः परतः प्रामाण्येऽपि नानवस्थेति चेदेवं तर्हि व्याघातानुभवस्य स्वतः प्रामाण्यमिष्टम् । अतस्तस्य साक्षिणः स्वप्रामाण्य एव सर्वव्यवहारावस्थितिः[1] तद्वद्वेदस्यापि स्वप्रामाण्यं स्थितम् ।

---

[1] 'ग'—व्यवहारोऽवस्थितः ।

न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्तीति भाल्लवेय-श्रुतेश्च ।
नित्यत्वं च शब्दादेव प्रतीयते ।
वाचा विरूप नित्ययेत्यादेः ।
अनादिनिधना नित्येति च स्मृतिः ॥

॥ ॐ दृश्यते तु ॐ ॥ ९ ॥

अधिकारिणां फलम् ॥
भविष्यत्पुराणे च—
ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतःप्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ॥
यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ॥
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।
अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशय इति ॥

॥ इति श्रुतिनित्यत्वाधिकरणम् ॥ २ ॥

---

**स्वतःप्रामाण्यं च शब्दात्प्रतीयते न चक्षु**रित्यादेः । **नित्यत्वं च** "तस्मै नूनमि"त्यादेः । हे **विरूप** तस्मा अभिद्यवे सुष्टुतिं चोदस्व[1] । अभितो द्योतत इत्यभिद्युः । वृषा श्रेष्ठः । सुष्ठु स्तुतिं[2] प्रति प्रेरयेति प्रार्थनं विरूपस्य ऋषेरन्तर्यामिविषयं भवति । "ऋचः सामानि जज्ञिरे" इत्यादिशब्दादुत्पत्तिमत्त्वमाशङ्क्याऽऽह—**अनादिनिधने**त्यादि । अनादिनिधनत्वेन नित्या, नत्वनिधनत्वमात्रेण ॥ ॥ छ ॥

इति श्रुतिनित्यत्वाधिकरणम्

---

१ 'क' 'ख'—चोदयस्व ।

२ 'ग'—सुष्टुतिं

मृदब्रवीदापोऽब्रुवन्नित्यादिवचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—

॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ॐ ६ ॥

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते ।
तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र ।
अतस्तासां सर्वमुक्तं युज्यते ॥

॥ ॐ दृश्यते च ॐ ॥ ७ ॥

तासां सामर्थ्यं महद्भिः ॥
भविष्यत्पुराणे च—
पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया इति ॥

॥ इत्यभिमान्यधिकरणम् ॥ ३ ॥

असदेवेदमग्र आसीत् ।
असतः सद्जायतेत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—

---

"मृदब्रवीत्" "तत्तेज ऐक्षत" इत्यादावचेतनानां वक्तृत्वाद्युक्तेर्युक्तिविरुद्धोऽयं वेदः । प्रत्यक्षमूला च सा न चालयितुं शक्यत इत्यतोऽब्रवीत् । अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ मृदाद्यभिमानिन्यो देवतास्तत्र वक्त्र्यादयो व्यपदिश्यन्ते । नत्वभिमन्यमानाः । मृदादिशब्दाश्च तासु मुख्याः । तासामितरेभ्यः सामर्थ्याऽधिक्यात्सर्वगतत्वाच्च सर्वं उक्तिदृष्ट्यादिकं तत्र तत्र उक्तं युज्यते ॥　　　　　　　　॥ छ ॥

इत्यभिमान्यधिकरणम्

"असदेवेदमग्र आसीत्, तत्सदासीदि"ति छन्दोग्यश्रुतिः । "देवानां पूर्वे युगे असतः सद्जायते"त्यादिना वाक्यजातेनासतः कारणत्वमुच्यते ।

## ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥

**प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् ।**
**असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते ।**
**सर्वशब्दानां ब्रह्मसमन्वयेऽपि तदधीनत्वाद्‌धर्मवदित्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः ।**

---

तस्मादुक्तसमन्वयस्य **विरोधः** । अथवा—**इत्यादिना**ऽसत्कारणवादिवाक्येन **सतः कारणत्वोक्तेर्विरोधः** । तस्मादसत्कारणं स्यादित्यत आह— **असदिति चेन्न प्रतिषेधमात्रत्वात्** ॥ प्रतिषेधबुद्धिविषयमात्रत्वात् । यद्यप्यभावानां भावधर्माः सन्ति, भावानां चापरे, तथाऽपि धर्मिणो भावरूपत्वं **मात्र**शब्देन विवक्षितम् । **न**ह्यभावरूपस्य धर्मिणः कारणत्वं दृश्यते भावधर्मवत्त्वेऽपि । नहि वन्ध्यासूनोः तद्भावान्यभेदादिभावधर्मवत्त्वेऽपि कार्यकरत्वं दृष्टम् ॥

ननु **"नासतोऽदृष्टत्वादि"**त्युपरिष्टादसत्कारणमतं प्रतिषेत्स्यति । तत्र कथमपुनरुक्तिरित्यत आह—**असत** इत्यादि । असत एवाग्रेस्थितिः, तस्य कारणत्वं, तच्च मनःपूर्वकमित्याद्युक्तिभिर्विरुद्धं ब्रह्मकारणवाक्यम् । अस्ति हि तदुक्तिः श्रौती—"इदं वा अग्रे नैव किञ्चनासीत् तदसदेव सन्मनोऽकुरुते"त्यादिकेति । **एतन्मतमत्र निषिध्यते** । उपरि तु तद्विवर्तपक्षः सामयिकः संमतः । अथवाऽ**सतः** कारणत्वाद्युक्तिहेतोः "असदेवेदमग्र आसीदि"त्यादि**वाक्य**मुक्तसमन्वय**विरुद्धम**प्रामाण्यमेति **इत्येतदत्र निषिध्यते** । अथवाऽसतः कारणत्वोक्त्या सत्कारणत्वोक्त्या च परस्पर**विरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते** । अथवा प्रागुत्पत्तेर्विनाशादूर्ध्वं चासदात्मकत्वात्कार्यस्य कारणमप्यसद्भवितुमर्हति वस्तुत्वात्कार्यवत् । एव**मसतः कारणत्वाद्युक्तिविरुद्धं** ब्रह्मवाचकं **वेदवाक्यमित्येतदत्र निषिद्ध्यते** ननु शून्यसमयः । **तथाश्रुतिप्राप्तं** मुख्यार्थस्य ब्रह्मणोऽपरित्यागेनैवासतो मुख्यत्वापरिग्रहेण श्रुतिप्राप्तम् । अतो न प्रबलेयं श्रुतिप्राप्तिः । नचात्र श्रुतीनामेव मिथो विरोधनि-

---

१ 'भा'—**स्यादिति प्राप्त**

**तथाश्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते ।**
**समयस्योपरि निषेधात् ।**
**अर्थाद्युक्तिविरोधो निराक्रियते ॥**

**॥ ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥**

**असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ॥**

**॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥**

**प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते ।**
**सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ॥**

**॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ११ ॥**

**दृष्टान्ताभावादेव ॥**

**॥ ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ १२ ॥**

---

रासः । येनोत्तरत्र पुनरुक्तिशङ्का स्यात् । किन्तु, अर्थाद्युक्तिविरोधो निराक्रियते । अथात्र पुनरपि समापतिता पुनरुक्तिः । यतो युक्तिसहितश्रुतिविरोधोऽप्युपरि निरसिष्यते । मैवम्, मुखतः श्रुतिविरोधः, **अर्थाद्युक्तिविरोधो निराक्रियते** । तच्चोक्तं हि— **तथाश्रुतिप्राप्तमेवे**त्यादि ॥ अत एव चावोचन्तानुद्रवन्तो भगवन्तो वृत्तमनुव्याख्याने—

"स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः ।
एवं चतुर्विधा नैव विरुध्यन्तेऽन्वयं प्रती"ति ॥ ॥ छ ॥

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॥ **असत** उत्पत्त्यङ्गीकारे **प्रलयेऽपि** पूर्ववत्सर्वासत्त्वप्रसङ्गादसमञ्जसमिदमसन्मतम् ॥ ॥ छ ॥

यथाऽग्रे नैव किञ्चनाऽसीत् तथाऽन्ते नैव किञ्चन भविष्यतीति युक्तमेवेत्यत आह— **न तु दृष्टान्तभावात्** ॥ **प्रलये सर्वासत्त्वं न युज्यते** । **सद्भावे दृष्टान्तभावादेव** । नचोत्पत्तेः प्रागपि युज्यते तस्मादेव ॥ ॥ छ ॥

**स्वपक्षदोषाच्च** असद्वादिनः ॥ ॥ छ ॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेन्न ।
एवं सति प्रामाणसिद्धेऽपि मोक्षेऽन्यथानुमेयत्वादनिर्मोक्षप्रसङ्गः ॥
अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम् ।
नातोऽन्यच्छङ्क्यम् ॥
यावदेव प्रमाणेन सिद्धं तावदहापयन् ।
स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचिदिति वामने ॥

## ॥ ॐ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॐ ॥१३॥

एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि—
अकस्माद्धीदमविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति ।
प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति ।
प्रधाने लयमभ्येति नह्यन्यत्कारणं मतम् ॥
जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परमित्यादिश्रुतिप्राप्ता निराकृताः ।
यथा दुःखादिषु जीवस्यास्वतन्त्रत्वमेवमन्येष्वपीति दृष्टान्तः ।

---

**तर्काप्रतिष्ठानादि**त्यादिसूत्रम् । **एतावानेव तर्को** नैतत्प्रतीपत्वे**नेति प्रतिष्ठापकप्रमाणाभावात्** । यथा त्वयाऽनुमितं तथाऽ**न्यथा** मयाऽ**प्यनुमेयं** स्यात् , त्वत्पक्षे प्रमाणसद्भाववन्मत्पक्षेपि तस्य युक्तत्वादिति चेत् , **एवं सति** यथा प्रमाणसिद्धो मोक्षः, तथाऽन्यथाऽप्यनुमेयत्वादनिश्चितो मोक्षः प्रसज्येत । अथवा सत्त्वेन **प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वात्त**दभावप्रस**ङ्गः** । **अपि**-शब्दात्सर्वस्यापि प्रमाणसिद्धस्यान्यथात्वप्रसङ्गः । अपिच त्वदुक्तन्यायेनैव त्वदुक्तादन्यथाऽप्यनुमेयत्वप्राप्तेः स्वव्याघातः स्यात् ॥　　॥ छ ॥

**एतेन शिष्टापरिग्रहा अपि व्याख्याताः** ॥ अस्मत्पक्षे **दृष्टान्तभावेन** परपक्षे तद**भावेन च** । **अपरिग्रहा** वेदैरपरिगृहीताः । अत्राऽदिशब्देन मायि**ब्रह्म**-कर्तृत्वमेव बोद्धव्यम् । **श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिताऽधस्तात्** । प्रद-

श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता ।
यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते ।
यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ॥

॥ इत्यसदधिकरणम् ॥ ४ ॥

## ॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥

कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्तीति मुक्तजीवस्य परापत्तिरुच्यते ।
अतस्तयोरविभागः ।
अतः पूर्वमपि स एव ।
नह्यन्यस्यान्यत्वं युज्यत इति चेन्न ।
स्याल्लोकवत् ।
यथा लोक उदक उदकान्तरस्यैकीभावव्यहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि ॥
तथाच श्रुतिः—
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवतीति ॥

---

र्शयिष्यते च साऽसत्कारणश्रुतीनामसम्भवसूत्रे । **यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते** । यथा चात्र प्रधानं कथञ्चित्कारणमुपादानत्वेन । यथा वा "यो भूतानामधिपतिः" "सोऽरोदीदि"त्यादौ । **यत्र विरोधस्तत्र ब्रह्मैव** । यथा "सत्यं ज्ञानं" "नकिरिन्द्र" "निषुसीदे"त्यादौ । 'अकः' न कोऽपि, सर्वतो विलक्षण इत्यर्थः ॥ ॥ छ ॥

**इत्यसदधिकरणम्**

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॥ **कर्माणि विज्ञानमयश्चे**त्यत्र न स्वरूपैकत्वमुच्यते । कर्मणां तदनभ्युपगमात् । प्रपञ्चितं चैतत्तत्वनिर्णये भगवत्पादैरेव—"स्वरूपैक्याभिप्राये कर्माणि विज्ञानमयश्चेति न युज्यते । नहि तत्पक्षेऽपि कर्मणां ब्रह्मैक्यं मुक्तावस्ति । निवृत्त्यभिप्राये पञ्चदशकलानामपि समत्वादि"त्यादि ।

**स्कान्दे च—**
**उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।**
**नचैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥**
**एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।**
**प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणादिति ॥**
**ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।**
**तद्यत्स्वभावः कैवल्यं स भवान्केवलो हर इति च ॥**
**न ते महित्वमन्वश्नुवन्ति ।**
**न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापेत्यादि च ।**
**फलत्वेऽपि युक्तिविरोधेऽन्तर्भावदत्रोक्तम् ॥**

**॥ इति भोक्त्रधिकरणम् ॥ ५ ॥**

---

अतो ज्ञानोत्तरकालीनकर्मभिः सह मुक्तजीवस्य परोपकण्ठे स्थितिस्तद्बुद्धिसारूप्यं वेह विवक्षितम् । "स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयत" इति च श्रुतिर्ब्रह्मविदः कर्मणामक्षयमाचष्टे ॥ 'तादृक्त्वमे'कस्थानगतत्वेन मिश्रत्वम् । **तादात्म्यं** तादात्म्यसादृश्यादेव, न स्वरूपैक्यम् । **नासौ भवती**ति प्रकटप्रतिषेधात् । तदधीनत्वं तत्प्राधान्यं तन्मत्यैक्यं तत्सामीप्यं तत्सारूप्यं तत्स्वारूप्यमित्यनेकविधं हि तादात्म्यम् ॥ कुत एतज्ज्ञानफलं निर्वाणमत्रोक्तमित्यत आह—**फलत्वेऽपी**ति । **फलत्वेऽप्येतदत्रोक्तं**, जीवैक्य ईशितुः कर्तृत्वविरोधस्य **युक्तिविरोधेऽन्तर्भावात्** । यावन्न जीवादात्यन्तिकभेदसिद्धिस्तावद्युक्तिविरुद्धमीश्वरस्य कर्तृत्वम् । न खल्वितोऽधिको यौक्तिको विरोधोऽस्ति । नहि परतन्त्रेणाल्पविदाऽल्पशक्तिना दुःखिनाऽभिन्नस्य परस्य सर्वकर्तृत्वं युक्तम् । अनीश्वरत्वादिप्रसङ्गात् । अपरथा कथ'मितरव्यपदेशादि'त्यादि । अतोऽस्य विचारस्य फलगोचरत्वेऽपि[1] प्रधानयुक्तिविरोधविचारेऽन्तर्भावात्[2]प्रथमप्राप्तत्वाच्चाविरोधप्रस्तावस्यात्रोपपत्तिः ॥ ॥ छ ॥

**इति भोक्त्रधिकरणम्**

---

१ 'क' 'ख'—विषयत्वे
२ 'ग'—विरोधेऽन्तर्भावा-

## ॥ ओं तदनन्यत्वमारम्भणशब्दादिभ्यः ओं ॥ १५ ॥

**स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा ।
नैवं ब्रह्मणः ।
स्वरूपसामर्थ्यादेव तस्य सृष्टिः ।
किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथाऽऽसीदिति ह्याक्षेपः ।
अधिष्ठानाद्यनुक्तेः ।
आदिशब्दाद्युक्तिभिश्च—
परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः किं तस्य साधनैरित्यादिभिः ॥**

## ॥ ओं भावे चोपलब्धेः ओं ॥ १६ ॥

**स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत ॥
अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन ।
अतो वेदत्वमेतेषां यतस्ते सर्ववेदका इति स्कान्दे ॥
अद्भ्यः सम्भूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधीत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—**

## ॥ ओं सत्त्वाच्चावरस्य ओं ॥ १७ ॥

**अवरस्य तदधीनस्य साधनस्य सत्त्वात् ॥
काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासीत्तदावृतमसीदथ ह्येक एव परम आसीद्यस्यैतदासीन्न ह्येतदासीदिति काषायणश्रुतिः ॥**

---

**तदनन्यत्वमारम्भणशब्दादिभ्यः** ॥ स्वतन्त्राणि बहूनि च साधनानि पटादिसृष्टौ दृष्टानि । नहि तुरीतन्तुवेमादेः प्रातिस्विककार्यशक्तिः कुविन्दाद्यधीना । अतोऽन्यसामर्थ्यसहकृतः पटादिनिर्माता । ब्रह्मणस्त्वनन्यसामर्थ्यादेव जगत्सृष्टिः । तदनन्यत्वं स्वतन्त्रकारणस्य ब्रह्मणोऽन्यत्वेनाभावः । कुतः? **किंस्विदासादित्यारम्भणशब्दादिभ्यः** । आक्षेपस्वरूपो ह्ययं व्यपदेशः, न प्रश्नस्वरूपः । उत्तरत्राधिष्ठानारम्भणाद्यनुक्तेः ॥　　　　॥ छ ॥

आधीयन्त इत्यापः कर्माणि । पृथुत्वात्पृथिवी प्रकृतिः । रसो भक्तिः । **सत्त्वाच्चावरस्य ॥ तदधीनस्य साधनस्य सत्त्वादेवाद्भ्य** इत्यादिवचनं नतु स्वत-

## ॥ ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ओं ॥ १८॥

**नासदासीन्नो सदासीदिति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न ।**
**अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते ।**
**तम आसीदित्यादिवाक्यशेषात् ॥**

---

न्त्रस्य ॥ तदधीनस्य सत्त्वे प्रामाणामाह—**काल आसीदि**त्यादि । अस्य जगतोऽग्रे **कालः पुरुषः परम**श्चैवाऽ**सीत्** । **यत्त**त्कालादिक**मासीत्तदावृतमासीत्** । **अथवा** स **एकः परम एवाऽसीत्** । यदधीन**मेतदासीत्** । न स्वतन्त्रम् । **न ह्येतदासीदि**ति वक्तुं शक्यते, परतन्त्रत्वादेव । अथवा, **अथे**ति विशेषद्योतकः । **एको** भगवानेव **परमः** प्रधान **आसीत्** न ह्यन्यत्परममासीत्, किन्तु तदधीनमेव ॥छ॥

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्** ॥ **"नासदासीदि"**त्यादिसर्व**सत्त्वव्यपदेशान्न** किञ्चित्साधनमस्ती**ति चेन्न** । **अव्यक्तत्वपारतन्त्र्या**वृतत्वादिधर्मान्तरविवक्षया **तदसत्त्वमुच्यते** । न सर्वाभावविवक्षया । वाक्यशेषे तमःसलिलाद्यभिधानात् । "तस्माद्धान्यन्न परः किञ्चनासे"ति वाक्यशेषे च सुखचेष्टकादन्यस्य परत्वमात्रेण निषेधात् ॥

केचिदेतानि सूत्राण्यन्यथा योजयन्ति । तद्यथा—**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॥ यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावं, तर्हि प्रत्यक्षादिसिद्धस्य तयोर्विभागस्याभावः प्रसज्येत । तयोश्चेतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्येतेत्ति **चेत्, स्याल्लोकवत्** । यथा समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गबुद्बुदादीनां मिथो विभागः मिथः संश्लेषादिव्यापारश्चोपपद्यते । नच समुद्रात्मनोऽनन्यत्वेऽपि फेनतरङ्गादीनामितरेतरभावापत्तिः । नच तावता समुद्रादन्यत्वमप्येवमिहापि स्यात् ॥

---

१ 'क' 'ख'—व्यवहार—
२ 'ग'—समुद्रान्यत्व—

**तदनन्यत्वमारम्भणशब्दादिभ्यः।** अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः[1]। न त्वयं विभागः परमार्थतोऽस्ति। यतः कारणाद्ब्रह्मणोऽ**नन्यत्वं** व्यतिरेकेणाभावः कार्यस्यावगम्यते। कुतः? **आरम्भणशब्दादिभ्यः**। आरम्भणशब्दस्तावत्—एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकार" इत्यादि। एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटादि विज्ञातं स्यात्। यतो वाचाऽऽरम्भणं विकारः नामधेयमात्रमनृतं मृत्तिकेत्येव सत्यम्। एवं दृष्टान्तोक्तेर्दार्ष्टान्तिकेऽपि ब्रह्मणि कार्यस्य व्यतिरेकेणाभावः। आदिशब्दात् "स आत्मा तत्त्वमसी"त्याद्यात्मैकत्वप्रतिपादकमपि वाक्यजातमुदाहर्तव्यम्। अन्यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तेः। तस्माद्यथा घटशरावाद्याकाशानां महाकाशादनन्यत्वं, यथा वा शुक्तिरजतादीनां शुक्त्यादिभ्योऽनन्यत्वं, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोक्तृभोग्यादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव इत्यर्थः॥ नन्वेकस्यैव ब्रह्मणो नानाभोक्तृभोग्यात्मकत्वमप्यस्तु, यथा समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम्। तदुक्तं च स्याल्लोकवदिति त्वयैव। यथा वा मृदात्मनैकत्वं घटाद्यात्मना नानात्वं, एवं च मृदादिदृष्टान्ता अनुरूपाः स्युः। मैवम्। तत्र प्रकृतिमात्रस्य सत्यत्वावधारणात्। वाचारम्भणशब्देन विकारस्यानृतत्वाभिधानात्। दार्ष्टान्तिकेऽपि तत्सत्यमिति ब्रह्मण एव सत्यत्ववचनात्। तत्त्वमसीति शारीरस्य ब्रह्मभावोपदेशाच्च। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति भेददृष्ट्यपवादश्च श्रूयते। न चैतावता लौकिकवैदिकभेदव्यवहारलोपः। स्वाप्नस्येव प्राक्प्रबोधादुपपत्तेः। न चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वानुपपत्तिः। शङ्काविषादिनिमित्तस्य सत्यस्यैव मरणस्योपलब्धेः। तस्मान्मिथ्याभूतेनापि शास्त्रेण सत्यब्रह्मावगति

१ 'ख'—विहितः।

**नचान्यत्र प्रमाणमस्ति ।**

---

रुपपद्यते । तस्मात्परमार्थतोऽद्वितीयं ब्रह्म । तस्याऽत्मभूते इवाविद्याकल्पिते नाम-रूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारबीजभूते । ताभ्यामन्यः सर्वज्ञ ईश्वरः । एवमविद्याकल्पितनामरूपोपाध्यनुरोधीश्वरो भवति । तदेवमविद्याकृतमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च । न परमार्थतः । सूत्रकारोऽपि व्यवहारावस्थाभिप्रायेण स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ॥

**भावे चोपलब्धेः॥** भाव एव कारणस्य कार्यमुपलभ्यते । नाभावे, सत्यां हि मृदि घट उपलभ्यते । नच नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा । यदि धूमादौ दृष्टा तथाऽपि न कश्चिद्दोषः । तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः । लोकेऽपि तन्तुव्यतिरेकेण पटो नोपलभ्यते । तन्तव एवाऽतानवितानवन्तः प्रदृश्यन्ते । **भावाच्चोपलब्धेरि**ति वा सूत्रम् । प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वमित्यर्थः । तन्तुसंस्थाने हि पटे तन्तु व्यतिरेकेण पटो नाम कार्यं नोपलभ्यते । एवं तत्तत्कारणद्वारेण परब्रह्मण्यद्वितीये पर्यवसितिः ॥

**सत्त्वाच्चावरस्य** । अपिच प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वम[2]-वरकालीनस्य कार्यस्यावगम्यते । "सदेव सोम्येदमग्र आसीदि"त्यादाविदंशब्द-गृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात् । अतोऽप्यनन्यत्वमेव ॥

**असद्व्यपदेशान्नेति चेन्ने**त्यादि सूत्रम् । "असदेवेदमग्र आसीदि"त्यादौ प्रागुत्पत्तेः कार्यस्यासत्त्व**व्यपदेशान्न** सत्त्वमिति **चेन्न** । नह्ययमत्यन्तासत्त्वाभि-प्रायेण व्यपदेशः । व्याकृतनामरूपत्वाद्धर्मात् **धर्मान्तरेणा**व्याकृतनामरूपत्वेनाय-मसद्व्यपदेशः । "तत्सदासीदि"त्यादि **वाक्यशेषात्** । तदेव ह्यत्र सदिति विशि-नष्टि । अत एवमुक्तन्यायेन मूलकारणमेवान्त्यात्कार्यात्तेन तेन कार्याकारेण नट-

---

१ 'ग''च'—कृत

२ 'क''ख'—नैव सत्त्व-

वत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते । तस्मात्परमार्थतोऽद्वितीयं ब्रह्म, अनिर्वचनीयमन्यदित्यधिकारणार्थ इति । अत आह—**नचान्यत्र प्रमाणमस्तीति** । **न** तावदनिर्वाच्यत्वे सूत्रं वेदवाक्यमन्यद्वा **प्रमाणमस्ति** । अनिर्वचनीयत्वसाधकस्यातत्वावेदकत्वेनाशास्त्रीयत्वात् । अतत्वावेदकत्वेऽपि तात्विकावस्थापेक्षयाऽऽभासत्वं न व्यवहारावस्थायामपीति चेदेवं तर्हि व्यावहारिकमेव जगतो मिथ्यात्वमभ्युपेतं न तात्विकं स्यात् । ततश्चात्माद्वैतस्य व्यावहारिकत्वप्रसङ्गः । प्रपञ्चसत्यत्वस्य तात्विकत्वप्रसङ्गः । अपिच व्यवहारनिर्वाहकं ह्यतत्वावेदकमिष्यते । व्यवहारस्तु तत्वग्राहकेणैव सत्यत्वविषयेणैव निरुह्यते । किमनेन मानाभासेनान्यथात्वविषयेणाप्रयोजकेन? अथोच्येत—अनिर्वचनीयत्वमानं तत्वावेदकमेव; तत्वतोऽनिर्वाच्यं जगदिति ब्रूम इति । तर्हि मुक्तावप्यनिर्वाच्यप्रपञ्चो न निवर्तेत, तत्वावेदकप्रमाणसिद्धत्वाद्ब्रह्मवत् । तस्मान्नानिर्वाच्ये तत्वावेदकमतत्वावेदकं च **प्रमाणमस्ति** ।

तदनन्यस्य च कथमनिर्वाच्यत्वम्? अन्यराहित्यमात्रमत्रानन्यत्वं न त्वैक्यमिति चेन्न, भेदरहितस्य तेनाभेदो बलाद्भवत्येव, ब्रह्मस्वरूपत्वात् । नच मृद्घटादिवदत्र प्रकृतिविकारभावः, येनानन्यत्वाशङ्कावकाशः । नच निर्दिष्टदृष्टान्तस्तदनुबन्धीत्यादिकमवादिष्म । यच्चान्यदन्यदुपन्यस्तं; तदपि तत्र तत्र दत्तोत्तरमेवेत्युपेक्ष्यते । चिद्भावानुरक्ता च बुद्धिरचित्सु परिमार्गणीया, या तदनन्यत्वसाधनी शोधिता । **भावाच्चोपलब्धेरि**ति वा सूत्रमिति सूत्रविकल्पनाऽपि तत्सम्प्रदायापरिज्ञानविजृम्भितेति न प्रबुद्धपरिषदि प्रौढिमावहति ॥

कथञ्च प्रागुत्पत्तेः कारणात्मना सतः कार्यस्य तत्त्वान्यत्वाभ्यां सदसत्त्वाभ्यां चानिर्वचनीयत्वम्[1] । **नच** "नासदासीन्नो सदासीदि"ति तत्र **प्रमाणमस्ति** । तदानीमिति विषेषणात्सृष्टेरूर्ध्वमुभयोरपि सद्भावावगमात् । नचात्र सदसती भावाभावौ, पृथिव्यादिभूतत्रयं सद्व्यक्तत्वादपरं द्वयमसदव्यक्तत्वादुच्यते । "यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदि"ति च श्रुतिः । अन्यथा रजआदेः सदन्तर्भावात्पृथङ्निषेधायोगात् ।

---

[1] 'ग'—चानिर्वाच्यत्वम् ।

अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।
अनाद्यनन्तं जगदेतदीदृक्प्रवर्तते नात्र विचार्यमस्ति ।
नचान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत् ।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि ।
यः सत्यरूपं जगदेतदीदृक्सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा ।
अथ हैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते ।
अथ हैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुत इत्यादिवचनेभ्यश्च ॥
परस्परविरोधे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यत इति बृहत्संहितायाम् ॥
विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत इति च ॥
ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः ॥
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रम इति च भागवततन्त्रे ॥
शास्त्रार्थयुक्तानुभवः प्रमाणं तूत्तमं मतम् ।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ॥

---

"अव्यक्तमसदित्युक्तं व्यक्तं सदिति चोच्यत" इति च ब्राह्मे ।

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।

**अजो ह्येको जुषमाण" इत्यादिश्रुतिस्मृतिवचनेभ्यश्च** न चेतनाभेदो जगन्मिथ्यात्वं च प्रामाणिकम् ।

ननु वर्णितमिह मानमैतदात्म्यमित्यादि । नच प्रतिपक्षप्रमोपन्यासमात्रबलादेतदपलापो युक्तः । सत्यम् । न तत्त्वदभिमते मानम् । प्रमाणान्तरविरोधात्, स्वव्याहतेश्च । एतदेव वर्णयति—**परस्परविरोध** इत्यादिना ।

प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रामाण्यपदवीं ययुरिति च पुरुषोत्तमतन्त्रे ॥

॥ ॐ युक्तेः शब्दान्तराच्च ॐ ॥ १९ ॥

साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते ।
तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेदित्यादेः साधनान्तरेण हि सृष्टिर्युक्ता ॥
अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टावित्यादिशब्दान्तराच्च ॥

॥ ॐ पटवच्च ॐ ॥ २० ॥

साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ॥

॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥

तच्च साधनजातं तेनानुप्रविष्टमेव ।
यथा शरीरेन्द्रियादिः ॥
प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान्सृष्ट्यर्थं जगतो विभुरिति च कौर्मे ॥

॥ इति तदनन्यत्वाधिकरणम् ॥

---

**अन्येषां तु विरुद्धानां** वचनानां **विप्रलम्भः** प्रयोजनं, **अथवा भ्रमः** कारणं कल्प्यम् ॥ ॥ छ ॥

**युक्तेः शब्दान्तराच्च** । **अष्टौ** लोकपालाः ॥ ॥ छ ॥

**पटवच्च** ॥ यथा **पटादिसृष्टिः** साधनान्तरकृता तथा जगत्सृष्टिरपि युक्ता । विरोधाभावात् । स्वातन्त्र्यस्यैव निषिद्धत्वात् । यत्राविरोधस्तत्र दृष्टानुसारस्साधुरिति ॥ ॥ छ ॥

अत्र स्वतन्त्रकारणं विषयः । तत्किं ब्रह्मणोऽन्यदप्यस्त्युत नेति सन्दिह्यते । अत्राऽयं पूर्वपक्षः । अस्त्यन्यदपि कारणं बहु स्वतन्त्रं जगतः । लौकिककार्येषु तथा दृष्टेः । नहि केवलकुलालमहिम्नैव करीरकरकादीनां सृष्टिः । मृद्दण्डचक्रसलिलादि-

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते—

**॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥२२॥**

---

सामर्थ्यसहकृतैव । यद्यपि तेषामचेतनानां तत्र व्यापारस्तदधीनः । तथाऽपि न तेषां प्रातिस्विककार्यसाधनसामर्थ्यं कर्तृनियतं, येन पारतन्त्र्यमखिलमधिगच्छेम । अतः **स्वतन्त्रबहुसाधनैव सृष्टिर्दृष्टा**[1]। तथेयमपि सृष्टिः सृष्टित्वादेष्टव्या, याऽत्र विमतिमध्यासिता । नच जगन्निर्मातुस्तादृक्स्वातन्त्र्ये प्रमाणमुपलभामहे । येनाऽस्मिन्साधने प्रतिज्ञाविरोधदोषेणोपालभ्येमहि । तादृक्स्वातन्त्र्ये चान्यनिरपेक्षनिर्माणात्कर्मकालादिवैयर्थ्यप्रसङ्गः । तस्मान्न ब्रह्मैव स्वतन्त्रकारणमिति प्राप्ते प्रतिविधत्ते । स्वतन्त्रकारणस्य ब्रह्मव्यतिरेकेणाभावः, ब्रह्मैव स्वतन्त्रकारणमित्यर्थः । **"किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्विदि"त्यारम्भणशब्दादिभ्यः**, आरम्भणाक्षेपाधिष्ठानाक्षेपशब्दादिभ्यः । नह्यत्रोपादानाद्युक्तिः । येन किंशब्दः प्रश्नविषयोऽभ्युपेयत । नच लोकन्यायः श्रुतिसिद्धमर्थं चालयितुमलम् । विरोधे स्वयमाभासत्वापातात् । नचान्यश्रुतिविरोधः । तासां परतन्त्रविषयत्वेन सावकाशत्वात् ॥

"वर्जितस्सर्वदोषैर्यो गुणसर्वस्वमूर्तिमान् ।
स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः" ॥
"द्रव्यं कर्म च कालश्चे"त्यादिभ्यश्च[2] ॥ ॥ छ ॥

**भावे चोपलब्धेः** ॥ यथैकः[3] स्वतन्त्रो भगवानुपलभ्यते तथाऽन्यस्वतन्त्रभावे तच्चोपलभ्येतेत्येषा दिक् ॥ ॥ छ ॥

**इति तदनन्यत्वाधिकरणम्**

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** ॥ ब्रह्मण इतरस्य जीवस्य स्वतन्त्रकर्तृत्वं यदि व्यपदिश्यते तर्हि तस्य **हिताकरणमहितकरणं** दुखप्राप्तिः

---

१ 'ग'—सृष्टिरिष्टा । २ 'ग'—त्यादिश्रुतिभ्यश्च ।
३ 'ग'—यथैकक: ४ 'ग'—भवञ्च—

**जीवकर्तृत्वे हिताकरणमहितकरणं च न स्यात् ॥**

**॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ॥**

**नच ब्रह्मणः श्रमचिन्तादिदोषप्रसक्तिः ।**
**अधिकशक्तित्वात् ।**
**श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामान्तरपुरुषः ।**
**एष त आत्मा सर्वान्तरः ।**
**योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यादिविशेषनिर्देशात् ॥**

**॥ ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ २४ ॥**

**चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य ॥**

---

सुखाप्राप्तिश्च **न** युज्यते । परतन्त्रत्वे तु युज्यते, अपरिहार्यत्वात् । अन्यथा हिताकरणादयो दोषाः प्रसज्येरन् । अतस्ते जीवे दृश्यमानास्तस्य स्वातन्त्र्यं निवारयन्ति ॥ ॥ छ ॥

ननु ब्रह्मणोऽपि सर्वदा सृष्ट्यादिकरणाच्छ्रमस्तत्र तत्रोपायादिचिन्ता च स्याल्लोकवत्, स्वविद्वेषिनिर्माणायुक्तिश्चेत्यत आह—**अधिकं तु भेदनिर्देशात्** ॥ **चिन्तादी**त्यादिशब्दाद्विद्वेषिनिर्माणादिनाऽपि नास्य दोषो भवति। **अधिकशक्तित्वात्** निर्दोषगुणपूर्णहेयोपादेयरहितत्वात् । अल्पशक्तीनां हि दोषा भवेयुः । अधिकशक्तित्वमधिकं च प्रमाणतः प्रख्यापयिष्यति "सर्वोपेते"ति । श्रोत्रादिशब्दैस्सर्वश्रोतृत्वादिकमत्र विवक्षितं स्वातन्त्र्येण च । सङ्कोचकारणाभावान्मुख्यस्वीकारोपपत्तेः । नाश्रुतत्वश्रोतृत्वादिकं जीवानां युक्तम् । "नान्योऽतोऽस्ति श्रोते"त्यादि च स्वातन्त्र्यापेक्षया ह्युच्यते । "एष त आत्मा अन्तर्याम्यमृत" इत्युक्तेरतोऽधिकत्वेन वैलक्षण्यनिर्देश एवायम् । भूतानामान्तरत्वं चाधिकशक्तित्वोपपादकं वैलक्षण्यम्। नहि दुःखिनां सर्वेषामन्तःस्थित्वा रमणमधिकशक्तित्वमन्तरेण सम्भवति ॥ ॥ छ ॥

ननु यदश्मादीनां कर्तृत्वविरोध्यचेतनत्वं न तज्जीवानामस्ति । तस्माद्वैलक्षण्यात्तेभ्योऽधिकशक्तित्वात्कर्तृत्वं च स्यादित्यत आह—**अश्मादिवच्च तदनुप-**

**यथा दारुमयीं योषां नरः स्थिरसमाहितः ।**
**इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजा इति च भारते ॥**

**॥ ॐ उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि ॐ ॥ २५ ॥**

**जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न ।**
**यथा क्षीरं गोषु दृश्यमानमपि प्राणादेव जायते—**
**अन्नं रसादिरूपेण प्राणः परिणयत्यसाविति वचनात् ।**
**एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव ॥**
**य आत्मानमन्तरो यमयति ।**
**नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरित्यादेः ॥**

**॥ ॐ देवादिवदपि लोके ॐ ॥ २६ ॥**

**नच कर्तुरीश्वरस्यादृष्टिविरोधः ।**

---

**पत्तिः** ॥ यद्यपि चेतनत्वविषेस्तथाऽपि पारतन्त्र्ये न कश्चिद्विशेष इत्यभिप्रैत्यश्मदार्वादिकमुदाहरन् । अश्मादिवदल्पमपि न स्वतः कर्तृत्वम् । किं पुनर्जगद्विषयमिति । 'समाहितं' समाधानम् । "नपुंसके भावे क्त" इति सूत्राद्भावेऽपि क्तप्रत्ययदर्शनात् । स्थिरसमाधान इत्यर्थः । **अङ्गं** हस्तादि, **अङ्गानि** अङ्गुल्यादीनि । नचास्वतन्त्रत्वादित्यसिद्धो हेतुः । हिताकरणादिना साधितत्वात् । आनुभविकत्वाच्च सर्वस्य ॥ ॥ छ ॥

**उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि** ॥ जीवेन कार्योपसंहारो दृश्यते । इदं कार्यमेवमुपसंहरिष्यामीति बुद्ध्या निरूप्यते । स च कार्योपसंहारस्तेन तथा क्रियमाणो दृश्यते । अतस्तस्य **कर्तृत्वमिति चेन्न । यथा गोषु दृश्यमानं क्षीरं** गोव्यतिरिक्तकर्तृकं; **एव**मित्थं करिष्यामीति **जीवे दृश्यमानो** जीवेऽन्यैर्**दृश्यमान**श्चा**पि कार्योपसंहारः परकृत एव** । तथाहि श्रुतिस्मृतयः ॥ ॥ छ ॥

ननु जीवादन्यः कर्ताऽस्ति चेद्दृश्येत । दृश्यन्ते हि लोके दृश्यमानानां घटादीनां कर्तार इत्यत आह—**देवादिवदपि लोके** ॥ **वाक्यानां** परस्पर**विरोध एव युक्तयो** भवन्ति । **नतु** केवलयुक्तयः स्वतन्त्रा युक्तयः स्युः, युक्त्याभासा एव

**देवादिवददृश्यत्वशक्तियोगात् ।**
**लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा ।**
**किम्वीश्वरस्य ॥**
**न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित् ।**
**विरोध एव वाक्यानां युक्तयो नतु युक्तय इति बृहत्संहितायाम् ॥**

---

प्रतिसाधनसम्भवात् । यथा विमतः कर्ता नास्ति, योग्यत्वे सत्यनुपलभ्यमानत्वात्सम्प्रतिपन्नवदित्येतस्मिन्नेव, जगतः कर्ताऽस्ति तस्य कार्यत्वात्, यत्कार्यं तस्य कर्ताऽस्ति यथा घटस्येति । नैवमनुमानयिष्यते,[1] आश्रयासिद्धत्वाद्धेतोः । न । निषेधहेतोरसतोऽप्याश्रयत्वात्, अन्यथाऽऽश्रयत्वनिषेधस्यैव निर्हेतुकत्वेनासाध्यत्वप्रसङ्गात् । अस्तु तर्हि निषेधहेतोरसदाश्रयत्वम् । तथाऽपि न परकीयहेतोस्तादृक्त्वं युक्तम् । यदि पक्षादन्य आश्रयः, अहो तर्हि महानेष्वेव दोषः । नहि भिन्नाधिकरणत्वं साध्यसाधनयोः साम्प्रतम् । जगन्निर्मातुः खल्वस्तित्वं साध्यते । साधनधर्मो निर्मेयाधिकरण इत्यसिद्धः । पक्षवृत्त्यभावात् । तदपि प्रलापमात्रम् । व्याप्तिसद्भावे साध्यसाधनयोरधिकरणभेदस्याकिञ्चित्करत्वात् । तदभावे तदेव दूषणं, नान्वेषणीयमपरम् । व्याप्त्यभावादेव शब्दनित्यत्वादौ घटकृतकत्वादेरहेतुत्वं न व्यधिकरणत्वात् । अधिकरणभेदेऽपि व्याप्यस्य हेतुत्वदर्शनात् । उक्तं च गुरुभिः—

"रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः ।
इत्युक्ते साधनं नो किं नह्याश्रैवात्र साधिके"ति ॥

अतो व्याप्तिरेव प्रयोजिका । नच जगतः कर्तारमन्तरेण कार्यत्वं युक्तम् । नचात्र सशरीरत्वमुपाधिः । प्रतिसाधनस्यैवोपाधित्वात् । तस्य चात्राद्दष्टत्वात् । "न तस्य कार्यं करणं च विद्यते" "सदेहस्सुखगन्धश्चे"त्यादि श्रुतेर्जगत्कर्तुरशरीरत्वात्स्वरूपचैतन्यदेहत्वाच्च श्रुत्यवसिते कर्तरि वः किमनुमानं फलतीति चेन्नैवम् । प्रमाणबाहुल्ये दार्ढ्यदर्शनात् । मानसिद्धेऽपि हि मानान्तरमाद्रियन्ते परीक्षकाः । श्रुत्यननुसारे चोपाधिदोषो दुर्निवार इत्यवादिष्म । नन्वेवं पर-

---

1 'क''ख''ग'—मनुमान इष्यते ।

**॥ ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ १७ ॥**

**दर्शयति चाऽनन्दस्य रूपत्वं तद्विज्ञानेन परिपश्यन्ति धीरा आनन्द-रूपममृतं यद्विभातीति ॥**

**शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।**

**चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेरिति च मात्स्ये ॥**

**॥ इत्यरूपाधिकरणम् ॥ ९ ॥**

---

ब्रह्मणो ज्ञानानन्दमात्रत्वमत्रोक्तं ननु तद्रूपरयेति चेन्न । रूपरूपिणो-रभेदात् । अपिच **दर्शयति चाथो अपि स्मर्यते** ॥ **दर्शयति च** ज्ञा**नानन्दस्य स्वरूपत्व"मानन्दरूपमि"**त्यादि ॥ **अथो च दर्शयति**--

"सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
सज्ज्ञानानन्ददेहस्तु सज्ज्ञानानन्दपादवानि"ति ॥

**अथो च दर्शयति**

"ब्रह्मणस्तद्गुणानां च भेददर्श्यधरं तमः ।
भेदाभेदप्रदर्शी च तम एवोत्तरं विशेत् ॥
विजानीयात्ततो ब्रह्म सदा सर्वगुणात्मकम् ।
गुणानां च विशेषोऽस्ति न त्रिभेदः कथञ्चन ॥
ते च सर्वे गुणाः पूर्णास्तच्छरीरः परः स्मृतः ।
आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः ॥
अदेहं भूतदेहं वा विदुस्ते चाधरं तमः ।
तथा प्रकृतिदेहज्ञा कर्मदेहविदोऽपि वा ॥
तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।
चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम् ॥
आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम ।

## ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ १८ ॥

**यस्मादेवं परमेश्वरस्वरूपाणां मिथो न कश्चिद्भेदोऽत एव सादृश्याज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ॥**

---

प्रत्येकं च गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्नि"ति पैङ्गिश्रुतिः ॥ ॥ छ ॥

### इत्यरूपाधिकरणम्

**अत एव चोपमा सूर्यकादिवत्** । एवञ्च जीवानां परमेश्वरेण चिदानन्दलक्षणरूपत्व**सादृश्याद्**भेदः स्वगतश्च स्थानभेदेऽपि न स्यादित्याशङ्का स्यात् । तत्परिहाराय **तस्य** जीवस्य सूर्यकादिवत्प्रतिबिम्बत्वं वदन्ती भेदं दर्शयति श्रुतिः । **अत एव** सादृश्यादेव **प्रतिबिम्बत्वमुक्त्वा भेदं दर्शयती**ति तदुक्त्यैव **भेदं दर्शयती**त्यर्थः । सूत्रगतेन **चशब्देन भेदं दर्शयति** श्रुतिरिति **दर्शयति** भगवान्बादरायण इत्येषोऽर्थश्च**शब्देन भेदं दर्शयती**ति भाष्यस्य । प्रतिबिम्बत्ववचनेनैव भेदो दर्शितो भवति । प्रतिबिम्बस्य भिन्नत्वनियमात् । बिम्बान्मिथश्च भिन्नान्येव हि प्रतिबिम्बानि दृश्यन्ते । नच प्रतिबिम्बत्वं बिम्बेऽध्यस्तम् । येन चिन्मात्रे ब्रह्मणि जीवत्वाध्यासस्य दृष्टान्तः स्यात् । प्रतिबिम्बप्रतिभानसमय एव तद्व्यतिरेकेण बिम्बोपलम्भात् । नेदं प्रतिबिम्बमिति बिम्बे प्रत्ययाच्च । नहि रजताध्यासकाले शुक्तिरियं न रजतमिति प्रतीतिः । नच तयोस्तदा भेदेन युगपद्ग्रहणम् । तस्मान्न प्रतिबिम्बप्रतीतिर्भ्रान्तिः । अपरथा बिम्बापरोक्ष्ये निवर्तेत । बिम्ब एव नेदं प्रतिबिम्बमिति च प्रतीतिः स्यात् तत्काले । नच तयोर्भेदप्रतीतिरेव भ्रान्तिर्न स्वरूपप्रतीतिरिति वाच्यम् । ऐक्यप्रत्ययस्य बाधकस्य जात्वनुदयात् । नच दर्पणादिरधिष्ठानं स्फटिक इव लोहितिम्न इति वाच्यम् । साध्यान्तर्भूतत्वात्तस्य । हन्तायमियन्तं कालं स्वच्छ एव स्फटिको दृष्टः पटुदर्शनस्यैव

**रूपं रूपं प्रतिरूपो बभूव ।**
**बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले ।**
**एवमेवाऽऽत्मका लोके परात्मसदृशा मता इत्यादि ॥**
**अत एव भिन्नत्वतदधीनत्वसादृश्यैरेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिना ॥**

**॥ इत्युपमाधिकरणम् ॥ १० ॥**

---

ममेदानीं जपाकुसुमसामीप्याल्लोहितो दृश्यत इति हि तत्र प्रतीतिः । बिम्बनिमित्तेन जन्यते चेत्, तन्नाशेऽपि न नश्येत् । निमित्तकारणनाशेऽपि कार्यस्थितेरिति चेन्न । स्पर्शज्ञानादौ व्यभिचारात् । अतो दर्पणाद्युपादानं सुखादिनिमित्तं प्रतिबिम्बमुत्पद्यत इत्यभ्युपगमे न कश्चिद्दोषः ॥

"**रूपं रूपमि**"त्यादेरयमर्थः[1] । अस्य परमेश्वरस्य **रूपं रूपं प्रति** प्रतिबिम्बाख्यो जीवो **बभूव** । 'तदस्य' परमेश्वरस्य 'रूपं' 'अस्य' प्रतिबिम्बभूतस्य जीवस्य 'प्रतिचक्षणाय' । 'इन्द्रः' परमेश्वरः । इदि परमैश्वर्ये इतिधातोः । "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षत" इति श्रुतेश्च । प्रसिद्धो हि दक्षिणाक्षिस्थो विष्णुः श्रुतिषु । "तमिन्द्रं सन्तमिन्द्र इत्याचक्षत"इति च परमात्मप्रकरण एव । मायाभिस्सामर्थ्यैरिच्छाभिर्वा बहुरूप ईयते । अस्य ह्यवतारात्मका 'हरयो' 'युक्ता' इति । "अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानी"ति ह्युपरि ॥

"स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिक" इति नारायणश्रुतिः ॥

"पृथगुपदेशात्" "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्" "ततो ह्यस्य बन्धविपर्ययौ"वित्यादिषु प्रपञ्चितानि हि भिन्नत्वतदधीनत्वसादृश्यानि । अतोऽत एवे-

---

1 "**रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।**
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश"**'त्यारण्यके ।

नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादिप्रयोजनमित्यतो ब्रवीति—

**॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ १९ ॥**

**अम्बुवत्स्नेहेन ।**
**ग्रहणं ज्ञानं ।**
**भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ॥**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति हि श्रुतिः ॥**
**महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।**
**तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकमिति पाद्मे ॥**

**॥ इत्यम्बुवदधिकरणम् ॥ ११ ॥**

---

त्याह । नोपाध्यधीनत्वेन **सूर्यकाद्युपमा** । जीवः परस्यानुपाधिरिति पुर एव परिहृतत्वात्तस्य । आदिशब्दान्नच भेदाभावेन । भेदस्य प्रतिपादितत्वात् । नच स्थिरविनाशिनोः सूर्यसूर्यकयोरभेदसम्भव इति ॥ ॥ छ ॥

**इत्युपमाधिकरणम्**

सादृश्याच्च सूर्यकाद्युपमेत्युक्तम् । एवञ्च **नित्यसिद्धत्वात्सादृश्यस्य** किं भक्त्या संरम्भतः प्रतिपाद्यमानया तज्जनितज्ञानेन तज्जनकवैराग्येण वा **प्रयोजनमित्यतो ब्रवीति । अम्बुवदग्रहणात्तु न तथात्वम्** ॥ **अम्बुव**दित्यनूद्य **स्नेहेने**ति व्याख्याति । स्नेहात्मकत्वादम्बुनः । तेन मानसं स्नेहं लक्षयति । ग्रहणपदं **ज्ञानमि**ति व्याख्याति । अम्बुवद्ग्रहणं स्नेहसहितं ज्ञानमित्यर्थः । अभिप्रायं कथयति **भक्तिमिति** । सलक्षणं दर्शयितुमेवमुक्तिः । गोपनीयत्वेन च । **महित्वबुद्धिरि**ति च महत्त्वबुद्धिः । "वैश्वानर महि नः शर्म यच्छे"त्यादिवत् । विष्णोरतिमहत्स्वरूपत्वात् स्वरूपज्ञानमेव तत्र महित्वबुद्धिः । अतत्वविज्ञानत्वप्रसङ्गादन्यथा[1] ॥

---

1 'च'—विज्ञानत्वादन्यथा ।

## ॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ २० ॥

**तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते ।**
**ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् ।**
**एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान्प्रति च सामञ्जस्यं भवति ॥**
**साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।**
**ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुता इति च ब्राह्मे ॥**

---

"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथे"ति भविष्यत्पर्वणि ॥　　　　॥ छ ॥

**इत्यम्बुवदधिकरणम्**

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** ॥ भक्त्यंशत्वेऽपि ज्ञानस्य पृथगुक्तिः स्नेहबहुमानात्मको भाव एवापरोक्षज्ञानसाधनमिति सूचयितुम् ।

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेने"ति च भगवद्वचनम् ॥
"पारोक्ष्येणैव तत्वं तु लोकं चापि विदन्ति ये ।
तेऽपि सत्स्नेहनिर्मुक्ता[1]स्तमो यान्ति विनिश्चयात् ।
नाऽपरोक्ष्येण च ज्ञानं तेषामुत्पद्यते क्वचिदि"ति सद्गुणे ॥

**तस्य च भक्तिज्ञान**वैराग्यादेः साधनस्याधिकारिभेदेन **वृद्धिह्रासभाक्त्वम**ङ्गीकर्तव्यम् । **ब्रह्मादीनामुत्तमानां** मनुष्यादीनामधमानां चेति **सर्वेषा**मधिकारिणां **भक्तत्वेऽन्तर्भावात्** । नहि मनुष्यादयो ब्रह्मादीनपेक्ष्यात्यल्पभक्तियुता अप्यभक्ता उच्यन्ते । अतो भक्तिर्वृद्धिह्रासवतीत्यङ्गीकारो युक्तः । भक्त्यादि-

---

१ 'ख' - स्नेहविनिर्मुक्ता-

**कुतः—**

**॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥**

**अथात आनन्दस्य मीमांसा भवतीत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् ॥**

**चशब्दात्स्मृतिः—**

**यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदन इति ॥**

**॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥**

---

साधनतारतम्याङ्गीकार एव साधकेषु ब्रह्मादिषु मनुष्यादिषु च **सामञ्जस्यमीश्वरस्य** स्यादन्यथा न स्यादिति ॥ ॥ छ ॥

**कुत** एतदित्यत आह—**दर्शनाच्च** ॥ **"अथात आनन्दस्य मीमांसा भवति** । युवा स्यात्साधुयुवाऽऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्ये"**त्यारभ्य** प्रवृत्तायां श्रुतौ मनुष्योत्तमादि**ब्रह्मपर्यन्तेषु** मुक्तेषु सुखतारतम्य**दर्शनात्** । तच्च मुक्तसुखतारतम्यं दृश्यमानं तत्साधनभूतभक्तितारतम्यानङ्गीकारे तेषां नीचोच्चात्युच्चसुखप्रदस्येश्वरस्य सामञ्जस्यमुपरुणद्धि । तच्च प्रसाधितमधस्तादेव । अतो ब्रह्मादिषूत्तमेष्वधमेषु मनुष्यादिषु च सामञ्जस्यात्तस्यैवमेवाङ्गीकर्तव्यम् । अल्पसुखेष्वल्पा भक्तिरधिकसुखेष्वधिकेति । वक्ष्यति च यावदधिकारमानन्दतारतम्यमुपरि । नच वाच्यमानन्दश्रुतौ श्रूयमाणमानन्दतारतम्यं संसारिविषयमेव न मुक्तविषयमिति । तस्यामेव तत्र तत्र श्रोत्रियादिपदोदितेषु ब्रह्मपर्यन्तेषु सुखविशेषदर्शनात् । प्रपञ्चितञ्चैतत् प्रमाणभूतप्रभूतगुणगुरुतममुखत एव बृहदारण्यकभाष्ये—"अथात आनन्दस्य मीमांसा भवती"त्यारभ्य मानुषादि-

---

१ 'ख' — ङ्गीकारात्सा—

ब्रह्मान्तानां मुक्तानामानन्दे शतगुणविशेषश्चोच्यते । मुक्तानां चायं विशेषः । "श्रोत्रियस्य चाकामहतस्ये"ति विशेषणात् । नहि ब्रह्मादीनामनधिगतश्रुतित्वं केषाञ्चिदस्ति । नच ब्रह्माण एव केचनाकामहताः केचन कामहता इत्यत्र प्रमाणमस्ति । तस्माच्छ्रोत्रिय इति प्राप्तश्रुतिफलत्वान्मुक्त उच्यते । अकामहतत्वं च मुख्यं मुक्तस्यैव ॥

"प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वात्तथाऽकामहताः स्मृता" इति भारते ॥
"ब्रह्मणोऽपि ह्यमुक्तस्य नाकामहतता परा ।
यतस्तस्यापि कामस्य क्षणव्यवहितिर्भवेत्" इति च ॥

'कामहतता' कामेनोपद्रवः ।

ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः ।
नास्त्यात्मसम्बद्धतया भोगाभावात्कथञ्चने"ति च ॥

नचान्यस्य कस्यचिच्छ्रोत्रियस्य चाकामहतस्य ब्रह्मणा समं सुखं युज्यते ॥

"ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयमि"त्यादिना श्रोत्रियत्वादिगुणैस्तस्यैवान्येभ्य आधिक्यात् ॥

नचेन्द्रादिपदाद्विरक्तस्येन्द्रादिसमं सुखं ब्रह्मपदाद्विरक्तस्य तत्समामित्यत्र किञ्चिन्मानमस्ति । दृष्टवस्तुनि विराग आयासाभावात् । कश्चित्सुखविशेषोऽन्यत्र दृश्यते । ब्रह्मपदाद्विरक्तस्येन्द्रपदाद्विरक्तस्य च नहि कश्चिद्विशेषो दृश्यते । अतोऽनुभवविरुद्धत्वाद्यत्किञ्चिदेतत् ॥

"नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः ।
निश्शेषदुःखहीनानां नित्यानन्दैकभोगिनाम् ।

अप्यानन्दे मिथो ह्युक्तस्त्वध्वर्यूणां श्रुतौ पृथगि"ति हरिवंशेष्विति[1] ॥

"सर्वं श्रुतिफलं मुक्तैः प्राप्यं नान्येन केनचित् ।
अतस्तु श्रोत्रियो मुक्तो ह्यन्यः श्रोत्रियको भवेत् ॥
अदुःखत्वं च तस्यैव कामैरहतता तथा ।
यः कामितं न प्राप्नोति स कामहत उच्यते ॥
काम्याप्राप्तेश्च पापाच्च कामात्कामहतः स्मृतः ।
उभयस्याप्यभावेन मुक्तोऽकामहतो मतः" इति महामीमांसायाम् ॥

"यस्तु साधुगुणैर्युक्तः तस्यैवाप्यखिला मही ।
त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः ॥
अधीतिफलपूर्णत्वादाध्यायक इतीरितः ।
स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः ॥
एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।
तस्माच्छतगुणानन्दा गन्धर्वा मानुषा मताः ॥
मुख्याः श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा ।
तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ॥
ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव चे"त्यादि यजुस्संहितायम् ॥

"यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः ।
सहि मुक्तोऽकामहतः सहि कामैर्न हन्यते ॥
यस्य कामास्तु सत्याः स्यु सहि कामैर्न हन्यते ।
नह्यकामः कचित्कश्चिद्दृश्यते श्रूयतेऽपिचे"ति ब्रह्माण्डे॥

---

१ —इयद्भाष्यंवाक्यमुद्धृतम् ।

**सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरित्यत आह—**

**॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ २२ ॥**

**उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति— नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्तीति ।**

---

स्पष्टं चानुव्याख्याने—

"तस्मादमुक्तसुखगं तारतम्यं पृथक्पृथक् ।
उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः ।
आहेति पेशलं तच्च चशब्दादेव गम्यत" इत्यादि ॥

"तस्येयं पृथिवीत्यादिपूर्वभावव्यपेक्षया ।
स एक इति संसारगतमुक्त्वा सुखं पुनः ॥
श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम् ।
संसारगाच्च संसारगतस्यैव शताधिकम् ।
मुक्तामुक्तस्य युक्तं स्याच्छ्रुत्युक्तमभिवीक्षत" इति च ॥ ॥ ७ ॥

## इति वृद्धिह्रासाधिकरणम्

ननु नास्य सृष्टिसंहारकर्तुः पालकत्वमहिमा विशेषतो वर्णनीयः । सृष्टानां यावन्न संहारस्तावत्स्थितेः स्वतःसिद्धत्वात् । अतो मुक्तौ संहाराभावादेव स्थितिसिद्धेर्न **पालकत्वमित्यत आह ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥** "अस्येदेषा सुमतिः पप्रथाने"त्यादिनोक्तं सृष्टिसंहारकर्तृत्वम्[1] ॥ 'अस्य' विष्णोः

---

[1] —"अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आभरणे बिभ्रमाणाः ॥
किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
सन्तस्थाने अजरे इतऊती अहानि पूर्वीरुषसोऽजरन्त ॥
नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यंस्य न हरितो वहन्ती"त्यधरोत्तरं श्रुतिवाक्यस्य ॥

**चशब्दात्स्मृतिश्च—**
**सृष्टिं च पालनं चैव संहारं नियमं तथा ।**
**एक एव करोतीशः सर्वस्य जगतो हरिरिति ब्रह्माण्डे ॥**

**॥ इति पालकत्वाधिकरणम् ॥ १२ ॥**

---

सकाशादेव 'एषा' ब्रह्मादीनां 'सुमति'रतिशयेन प्रथमानाऽभवत् । अनेन भूम्ना पूर्वतना 'गौरभवत्' । 'गौरि'ति द्यौः पृथिवी चोच्यते । 'यतो द्यावापृथिवी' इति ह्युपरि च, 'अस्य' विष्णोर्महिम्नैव सुमतिर्गौश्चाभवदिति वा । 'असुरस्य' वायो- 'र्योनौ' भार्यायां साधारणे 'आ' समन्ताद्धरणस्थाने ध्रियमाणा देवा 'अस्य' सकाशादेव 'सनीळाः' । अस्मादेव निलीयन्त इत्यर्थः । 'असुरो' वायुः । असु- त्वेन रमणादसुषु रमणाच्च । "महद्देवानामसुरत्वमेकमि"ति श्रुतिः ॥

"या मारुताद्गर्भमधत्त[1] पूर्वं
शेषं सुपर्णं गिरिशं सुरेन्द्रम् ॥
चतुर्मुखाभांश्चतुरः कुमारान्
सा द्रौपदी नाम बभूव भूमावि"ति च ब्रह्माण्डे ॥ भगवन्महि- म्नैव द्युभ्वाद्युत्पत्तिरित्यनङ्गीकारे तन्निर्माणेऽधिष्ठानादि किं स्यादित्याक्षेपः । "किं स्विद्वनमि"त्यादिरिति ह्यवोचत् । सम्यक्स्थायिन्यौ द्यावाभूमी 'इतः' समु- द्भूतज्ञानादिके 'अहान्युषस'श्चेत एव जीर्णा अभूवन् । अनेन भूम्ना विष्णुनै- **तावदेव न,** सर्वोत्तमादस्माद**न्यद**प्य**स्ति** । जगतो जलामृतादिभिरुक्षणशीलो **द्यावापृथिवी बिभर्ति** च । इत्थम्भूतस्य पूर्णानन्दस्य परमस्य स्मृत्या तद्वन्तो भूत्वा शरीरं 'पवित्रं कृणुत' । येन पवित्रीकरणेन 'हरितस्सूर्य'मिव सदा भगवन्त- मक्लेशेन 'प्रजा वहन्ती'ति । स आनन्दी शरीरं पवित्रं करोति ध्यातश्चेदिति वाऽर्थः ॥ ॥ छ ॥

**इति पालकत्वाधिकरणम्**

---

१ 'ग''च'- -माधत्त

**परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—**

**॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥**

**अव्यक्तमेव तद्ब्रह्म स्वतः ।**
**अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।**
**यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्ययो भवेदिति हि कौण्ठरव्यश्रुतिः ॥**

**॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥**

**आराधनेऽप्यव्यक्तमेव ।**
**ज्ञानिप्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ॥**
**न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति ।**
**नित्याव्यक्तो यतो देवः परमात्मा सनातन इति च ब्रह्मवैवर्ते ॥**

**नित्याव्यक्तेन रूपेण तथैव तिष्ठति । व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते । यथाऽग्न्यादयस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्त एवमिति चेन्न—**

**॥ ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ २५ ॥**

**अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात् ॥**
**नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परम इतीति माण्डव्यश्रुतेः ॥**
**स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे ।**

---

अथ जीवो ज्ञानयोग्योऽपि श्रवणादिमानपि न स्वशक्त्या भगवन्तं पश्यति । किन्तु **तत्प्रसादादेवेति वक्तुं** तस्य स्वभावविशेषमाह । **तदव्यक्तमाह हि** ॥ यथा प्रकाशदेशादिसामर्थ्यात्पदार्थानामभिव्यक्तिर्न तथा ब्रह्मणोऽभिव्यक्तिः प्रकाशरूपस्यापि स्वतः ॥ ॥ छ ॥

स्वतोऽव्यक्तमप्याराधनेन व्यक्तं करिष्यतीत्यत आह—**अपि संराधने प्रत्यक्षानुमानाभ्याम्** ॥ **आराधनेऽप्यव्यक्तमेव** न व्यक्तं क्रियते । तदाऽपि ज्ञानिनामव्यक्तत्वेन स्थितेर्दृश्यमानत्वात् । नह्याराधितवन्तोऽपि ज्ञानिनो व्यक्त-

**सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यत इति च गारुडे ॥**
**अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे ।**
**सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दन इति च कौर्मे ॥**
**तर्हि किं यत्नेनेत्यत आह—**

**॥ ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ॥ २६ ॥**

**विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात्प्रकाशश्च भवति ।**
**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः ॥**
**नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—**

**॥ ॐ अतोऽनन्तेन तथाहि लिङ्गम् ॐ ॥ २७ ॥**

---

त्वमापादयन्ति । सूक्ष्मा अपि परमाण्वादयो[1] न स्पष्टा भवन्ति । किं पुनरत्यन्तसूक्ष्मं तद्ब्रह्मेत्यनुमानम् ॥ ॥ छ ॥

**प्रकाशवच्चावैशेष्यम्** । अग्न्यादीनां भिन्नावयवोपचयापचयकृत एव स्थूलसूक्ष्मादिव्यवहारः । अग्न्यादिष्वपि सूक्ष्मं रूपं केषाञ्चिन्महतामेव स्पष्टं प्रकाशते । अत्यन्तसूक्ष्मत्वात् ब्रह्म परममित्युच्यते । "सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वर" इति श्रुतेः[2] प्रकृतिवच्च नास्य सूक्ष्मत्वं नैव चाग्न्यादिवदिति चकारार्थः । जनिमतां तु जननात्पूर्वं सूक्ष्मं रूपमूर्ध्वं स्थूलमिति विभागो युक्तः । स नैवास्मिन्निति[3] "**सर्वरूपेष्वजो यत**" इत्युक्तम् ॥ ॥ छ ॥

यद्येवं स्वतोऽव्यक्तं परतोऽप्यव्यक्तं रूपान्तरेऽप्यव्यक्तमेव । **तर्हि** तद्दर्शनार्थं श्रवणादिना **यत्नेन किं** स्यादित्यत आह—**प्रकाशश्च कर्मण्यभ्यासात्** ॥ निराकृतेऽप्यशब्दत्वे तदव्यक्तमित्युक्त्या कस्यचिदविषयत्वाशङ्का स्यादिति **विषयभूते तस्मिन्नेवे**त्युक्तम् । तद्विषयाण्येव श्रवणादीन्यभ्यसनीयानीत्यभिप्रायः । नह्यत्रावाच्यत्वमज्ञेयत्वं चाभिमतम् । अत एव श्रुतिर**व्यक्त**मित्युक्त्वा "**यज्ज्ञात्वामुच्यते जन्तुरि**"त्याह ॥ ॥ छ ॥

---

१ 'ग''च'— परमाण्वाकाशादयो  २ 'क''ख'—तुरश्रुतेः
३ 'क''ख'—युक्तो नैवास्मि-

**उभयत्र प्रमाणभावात्तत्प्रसादादेव प्रकाशो भवति ।**
**तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरिति लिङ्गात् ॥**
**युज्यते च तस्यानन्तशक्तित्वात् ।**
**नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।**
**तमृते परमात्मानं कः पश्येतामितं प्रभुमिति च नारायणाध्यात्मे ॥**

**॥ इत्यव्यक्ताधिकरणम् ॥ १४ ॥**

**स्वरूपेणाऽनन्दादिना कथमानन्दित्वादिरित्यत्रोच्यते—**

**॥ ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ २८ ॥**

**आनन्दं ब्रह्मणो विद्वान् ।**
**अथैष एव परम आनन्द इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते ।**
**यथाहिः कुण्डली कुण्डलं च । ·**
**तुशब्दात्केवलश्रुतिगम्यत्वं दर्शयति ॥**

**॥ ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ॥ २९ ॥**

**यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च, एवं वा दृष्टान्तः ।**
**तेजोरूपत्वाद्ब्रह्मणः ॥**

---

**अतोऽनन्तेन तथाहि लिङ्गम्** ॥ अव्यक्तोऽपि प्रकाशते प्रसन्नः सन् । तादृशशक्तिमत्त्वात् । न चाव्यक्तं प्रकाशत इति विरुद्धम् । **अव्यक्तं ज्ञात्वा मुच्यत** इति श्रुतेरेव । "**नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तित**" इति स्मृतेश्च॥छ॥

**इत्यव्यक्ताधिकरणम्**

ज्ञानानन्दरूपं ब्रह्मेत्युक्तम् । अतो न भिन्ना ज्ञानानन्दादिगुणाः । नचेत्सम्बन्धो वाच्यः । नचासौ समस्तीष्यते वा । यद्यभिन्नास्तदा **कथमानन्दित्वादिसम्बन्धव्यपदेशो** दण्डीत्यादिवदित्य**त्रोच्यते** ॥ **उभयव्यपदेशात्त्वहिकुण्डलवत्** ॥ स्वरूपत्वव्यपदेशात्तद्वत्त्वव्यपदेशाच्चाऽनन्दत्वमानन्दित्वं च । **युज्यते च** । लोके तथा दृष्टत्वात् । **यथाऽहिः कुण्डली** कुण्डलात्मकश्चेति ॥ ॥ छ ॥

## ॥ ॐ पूर्ववद्वा ॐ ॥ ३० ॥

**यथैक एव कालः पूर्वं इत्यवच्छेदकोऽवच्छेद्यश्च भवति ॥**
**अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः ।**
**स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः ॥**
**प्रकाशवत्कालवद्वा यथाऽङ्गे शयनादिकम् ।**
**ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एवत्विति नारायणाध्यात्मे ॥**
**आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् ।**
**कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेदिति ब्राह्मे ॥**

## ॥ ॐ प्रतिषेधाच्च ॐ ॥ ३१ ॥

**एकमेवाद्वितीयम्, नेह नानाऽस्ति किञ्चनेति भेदस्य ॥**

॥ इत्युभयव्यपदेशाधिकरणम् ॥ १५ ॥

---

**पूर्ववद्वा ॥ यथैक एव कालः** पूर्वकाल उत्तरकाल **इत्यवच्छेदकोऽवच्छेद्यश्च भवति । पूर्वं इति** स्वयमेवावच्छेदकः काल इति स्वयमेवाव**च्छेद्यश्च ।** न तत्र भेदः कालस्य । कालान्तराभावात् । अतः सविशेषत्वाद्युज्यते । एवमानन्दीत्यादिकमवच्छेदकं[1] ब्रह्मेत्यवच्छेद्यम् । अतः पूर्णानन्दत्वसर्वज्ञत्वसर्वैश्वर्यादिको महिमा हरेर्निरर्गल एव ॥ ॥ छ ॥

**प्रतिषेधाच्च ॥ "एकमेवाद्वितीयं" "नेह नानाऽस्ति किञ्चने"ति** स्वगतस्य गुणगुण्यादि**भेदस्य प्रतिषेधाच्च । इह** परमेश्वरे रूपेष्ववयवेषु धर्मेषु च । **किञ्चन नाना नास्तीत्यर्थः** ॥ स्वगतभेदाविवक्षाया**मिहे**ति विशेषणं व्यर्थं स्यात् ॥

"भेदेन दर्शनाद्वाऽपि भेदाभेदेन दर्शनात् ।
विष्णोर्गुणानां रूपाणां तदङ्गानां मुखादिनाम् ।
तथा दर्शनकालात्तु क्षिप्रमेव तमो व्रजेदि"ति ब्रह्माण्डे ॥ ॥ छ ॥

**॥ इत्युभयव्यपदेशाधिकरणम् ॥**

---

1 'ग' 'च' — नन्दीत्यव—

## ॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥

नचाऽनन्दादित्वाल्लोकानन्दादिवत् ।
एष सेतुर्विधृतिर्य एष आनन्दः परस्यैष नित्यो महिमा ब्राह्मणस्येति सेतुत्वं ह्युच्यते ।
यतो वाचो निवर्तन्त इत्युन्मानत्वम् ।
एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति सम्बन्धः ।
अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।
नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयत इति भेदः ॥
अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ॥

## ॥ ॐ दर्शनात्तु ॐ ॥ ३३ ॥

दर्शनादेव चान्यानन्दादीनाम् ॥
अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते तस्माद्ब्रह्मेत्याचक्षत इति हि कौण्डिन्यश्रुतिः ॥
अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—

## ॥ ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३४ ॥

जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते पादोऽस्य विश्वा भूतानीति तथा ॥

---

परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ अत्र "एतस्यैवाऽनन्दस्ये"त्यादिना एतदंशप्रतिबिम्बत्वेनतदधीनत्वादुपजीव्योपजीवक**सम्बन्ध** उच्यते नियम्यनियामकलक्षणश्च ॥

"प्रतिबिम्बस्वरूपविप्लुटकास्तदानन्दस्य चाखिलाः ।
मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदे"ति महासंहितायाम् ॥

आधारत्वामितत्वोपजीव्यत्वनियामकत्वानां व्यपदेशात् "**नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयत**" इत्याधिक्येन वैलक्षण्यव्यपदेशाच्च सर्वेरगाद्युत्तममेव **ब्रह्मानन्दादिकम्** ॥ ॥ छ ॥

**अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।**
**ज्ञापनार्थाय लोकस्य यथा राजेव देवराडिति च पाद्मे ॥**

**॥ इति परानन्दाधिकरणम् ॥ १६ ॥**

**परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दानां विशेष इत्यत्रोच्यते—**

**॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ३५ ॥**

**यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात्प्रतिबिम्बविशेष एवमानन्दादेरपि ॥**

---

अदृष्टत्वं परस्मादन्यैः । सर्वात्मनाऽस्पष्टत्वेन चा**व्यवहार्यम्** । अहेयोपादेयम् ॥

"ब्रह्माद्या यत्र जानन्ति कारणाद्यभिमानिनः ।
जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथार्चिषः ॥
अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फुटम ।
वेदरूपा परानन्दं वैलक्षण्यात्समस्ततः ॥
आनन्दो नेदृशानन्द इत्युक्ते[1] लोकतः परम् ।
प्रतिभाति नचाऽभाति यथावद्दर्शनं विने"ति ब्रह्मतर्के ॥ ॥ छ ॥

**बुद्ध्यर्थः पादवत्** ॥ सम्बन्धस्तदाभासत्वं, जीवस्योक्तश्च पूर्वसूत्रे । अधस्ताद्विवृतः पादशब्दार्थः । एवमत्यन्तविलक्षणो ब्रह्मानन्दादिरानुकूल्यादिलक्षणेनेतरानन्दादिसदृश आनन्दादिरित्युच्यते ॥ ॥ छ ॥

**इति परानन्दाधिकरणम्**

परानन्दादिप्रतिबिम्बत्वे **कथं** ब्रह्माद्यानन्दादीनां मिथो विशेषः । सृतिमानां त्वदृष्टादिना वैमल्यकालुष्यादेर्वैचित्र्यमुपपद्यते । न मुक्तब्रह्माद्यानन्दादीनां

---

१ 'क''ख'—इत्युक्तो

**ब्रह्मादिगुणवैशेष्यादानन्दः परमस्य च ।**
**प्रतिबिम्बत्वमायाति मध्योच्चादिविभेदत इति च वाराहे ॥**

**॥ ॐ उपपत्तेश्च ॐ ॥ ३६ ॥**

**ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ।**
**ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रतेति हि पाद्मे ॥**

**॥ इति स्थानविशेषाधिकरणम् ॥ १७ ॥**

**ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम् ।**
**अतः कथमव्यक्ततेत्यत आह—**

---

विशुद्धरूपाणां तदुपपत्तिरित्यत आह ॥ **स्थानविशेषात्प्रकाशादिवत् ॥ एवमानन्दादेरपी**त्यस्यायमर्थः । एवं परमानन्दादेरपि ब्रह्मादिस्थानगुणविशेषात् प्रतिबिम्बभूतानन्दादिविशेषः । "**प्रतिबिम्बत्वमायाति**" प्रतिबिम्बकरत्वमायातीत्यर्थः । अन्यथा सूर्यकाद्युक्तिविरोधात् । गुणानामेकैकशो गुणप्रतिबिम्बत्वज्ञापनं चात्र क्रियते । अतश्चैतत्सिद्धं यावन्तो गुणा उपास्यन्ते तावन्तः स्वस्मिन्नपि लभ्यन्त इति ॥

"ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु ।
प्रतिबिम्बस्तु विप्लुट्को विष्णोरेव परं सुखमि"ति महावराहे[1] ॥
उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ।
नचाभिन्नत्वमीशेन चिन्मात्रत्वं च युज्यत" इति ब्रह्मतर्के ॥ छ ॥

**॥ इति स्थानविशेषाधिकरणम् ॥**

श्रवणमननध्यानाभ्यासात्प्रसन्नं ब्रह्म प्रकाशत इत्युक्तम् । तदयुक्तम् । ध्यानकाल एव ब्रह्मरूपस्य दृश्यमानत्वात् । **अतः कथमव्यक्तत्वमित्यत आह—**

---

१ **'क''ख'—महावाराहे**

**॥ ॐ तथाऽन्यत्प्रतिषेधात् ॐ ॥ ३७ ॥**

**यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपि ।**
**यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति प्रतिषेधात् ॥**
**पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।**
**ब्रह्मैव प्रतिबिम्बे यद्वतस्तेषां फलप्रदम् ॥**
**तदुपासनं च भवति प्रतिमोपासनं यथा ।**
**दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् ।**
**उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादत इति च ब्रह्मतर्के ॥**

**॥ इति प्रतिषेधाधिकरणम् ॥ १८ ॥**

**देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्तेत्यतो ब्रूते—**

**॥ ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३८ ॥**

**सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते ॥**
**एष सर्व एष सर्वगत एष ईश्वर एषोऽचिन्त्य एष परम इति हि भाल्लवेयश्रुतिः ॥**
**सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु ।**

---

**तथाऽन्यत्प्रतिषेधात्** ॥ उपास्तिस्फुरितादप्याकारादन्यद्ब्रह्म । अन्तःकरणप्रविष्टपदार्थाकारस्फुरणं हि स्मृतिः । नच तत्र पदार्थो दृश्यते । तस्य विनाशेऽपि स्मृतिसम्भवात् । तस्यैवान्तः प्रवेशे बहुत्वप्रसङ्गाच्च । तदाकारस्फुरणमेव तत्स्मृतिरित्युच्यते । **यथा** प्रतिमायामित्थम्भूतो भगवानित्युपासनं **तदुपासनं भवति** ॥ एवं प्रतिबिम्बेऽपि । अल्पा अपि पिशाचादयः स्वाकारस्मृतौ किञ्चित्फलं दद्युः किमुत सर्वज्ञं सर्वशक्तिकं ब्रह्मेति ॥ ॥ छ ॥

## इति प्रतिषेधाधिकरणम्

यद्यपि सृष्टिस्थितिसंहारादिकर्ता स स्वयमेव । तथाऽपि कदाचित्क्वचित्किञ्चित्स्वकार्यं प्रत्यन्यं नियोजयिष्यति । स्वावतारादिकौतुकादित्यत आह—

स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ।
अतो मायामयं विष्णुं प्रवदन्ति सनातनमिति हि चतुर्वेदशिखायाम् ॥
आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥

कर्मापेक्षत्वात्फलदानस्य तदेव ददातीति न वाच्यम् ।
कुतः—

**॥ ॐ फलमत उपपत्तेः ॐ ॥ ३९ ॥**

अत एवेश्वरात्फलं भवति ।
नह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥

**॥ ॐ श्रुतत्वाच्च ॐ ॥ ४० ॥**

विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणमिति ॥

**॥ ॐ धर्मं जैमिनिरत एव ॐ ॥ ४१ ॥**

यतः फलं तदेव कर्मेश्वराद्भवति ।

---

**अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥ अनेनैव सर्वं प्रवर्तते ।** अनन्तेष्वपि स्वकार्येषु नित्यशक्तिमत्त्वात् । तद्विरुद्धधर्माभावाच्च ॥　　॥ छ ॥

इति सर्वगतत्वाधिकरणम्

वैषम्यादिनिराकरणार्थमीश्वरस्य फलदाने कर्मसापेक्षत्वमुक्तम् । अतस्तत्र कर्मणः प्राधान्यम् । तत्र कथमनेनैव सर्वं प्रवर्तत इत्यत आह **फलमत उपपत्तेः ॥ अत एव "सर्वत्र सर्वमेतस्मात्"** इत्युक्तेरेव । तस्मादेवे**श्वरात्फलं भवति** तस्यैव सर्वेशितृत्वात् । चेतनस्याप्यन्यस्य **स्वतः प्रवृत्ति**र्नास्तीत्युक्तं किं पुनर**चेतनस्ये**त्यर्थः ॥　　॥ छ ॥

**धर्मं जैमिनिरत एव ॥** फलहेतोर्धर्मादिरेव कारणं ब्रह्मेति जैमिनिः ॥ **यतः फलं** तस्मादेवेश्वरात् **कर्म भवति ॥** ततः फलमिति वाऽर्थः । "एष

**एष ह्येव साधुकर्म कारयतीति श्रुतेरिति जैमिनिः ॥**

**॥ ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ ४२ ॥**

**परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम् ।**
**पर एव कर्मप्रवर्तकः ।**
**पुण्येन पुण्यं लोकं नयति पापेन पापमिति हेतुव्यपदेशात् ॥**
**द्रव्यं कर्म च कालश्चेति च ॥**

**॥ इति फलदानाधिकरणम् ॥ २० ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये**
**तृतीयाध्याये द्वितीयः पादः ॥ ३ ॥ २ ॥**

---

**ह्येव साधु कर्म कारयति** तं यमेभ्यो लोकेभ्य उन्निनीषत" इत्यादिश्रुतेः । तत्तत्फलदित्सया तत्तत्कर्मकारकत्वात्कर्म कारयित्वैव फलं तदायत्तं ददातीत्यर्थः ॥छ॥

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥** भगवांस्त्वेवमाह । **उभयोश्च फलकारणत्वेऽपि** तत्र भेदः परस्य स्वातन्त्र्येण कर्मणोऽस्वातन्त्र्येणेति । कर्म परप्रवर्तितमेव फलदायि । नच फले देशकालनियतिरपि तदधीना । फलदाने परेच्छया पूर्वापरीभावदृष्टेः । नच फलदानशक्तिः पराधीनाऽपि नियताऽस्ति, भगवदनभिज्ञस्य पुण्यानामल्पफलत्वात् । तद्द्वेषिकृतानां पुण्यानां निष्फलत्वात् । तद्दर्शिनः पूर्वपापानां फलमदत्त्वैव विनाशित्वादुत्तरेषां चाश्लेषात् । उत्तरेषां पुण्यानामनन्तफलत्वात् । अतः कर्मणस्सर्वत्र पारतन्त्र्यमेव । परमस्तु स्वेच्छयैकैकश एवानन्तकर्मणामनन्तजीवराशीनां तदेकैककर्माभिमानिनां चानन्तकर्मणामित्येवमनन्तानन्तसन्तानानां तत्तत्कर्म प्रवर्तयति निवर्तयति च । पुण्येन च ज्ञानमुत्पाद्य पापं विनाश्य तस्य पुण्यपापरहितस्य ज्ञानिनः प्रसन्नः स्वयमेव फलमनन्तं ददातीत्यहो भगवतो नारायणस्याऽश्चर्यरूपोऽयं महिमेत्यभिप्रायः । अतः **पूर्वं तु बादरायण** इत्यसूत्रयत् । भाष्येऽप्युभयोः **फलकारणत्वेऽपी**त्यपिशब्देनारुचिमसूचयत् ॥

"कर्माण्यनन्तानि यथेष्टमीशः
सम्पाद्य तेषां फलमिच्छयैव ।
क्वचिद्ददाति क्व च नो ददाति
नह्यानन्त्यात्कर्मणां भोगनाशः ॥
स्वातन्त्र्यं चेत्कर्मणां सर्वभोगः
स्यान्नह्येवं क्वापि तत्केनचित्स्यात् ।
अतोऽपि स स्वेच्छया किञ्चिदेव
फलं कुर्याद्विफलं प्रायशश्च ॥
क्वचिज्ज्ञानं जनयन्भस्म कुर्यात्
स्वेच्छावृत्तिस्तस्य विष्णोस्सदैवे"त्यादि ब्रह्माण्डे ॥ ॥ छ ॥

**इति फलदानाधिकरणम्**

**इति तत्त्वदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः**

॥ श्रीः ॥



## ॥ तृतीयः पादः ॥

**उपासनाऽस्मिन्पाद उच्यते ।**

---

भक्तानामधिकारिणां भगवदुपासनप्रकारोऽस्मिन्पाद उच्यते । सा चोपासना द्विविधा ।

"सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपाऽपरा चैव तदङ्गं धारणादिकमि"ति ह्यनुव्याख्याने ॥

"ऋतं च स्वाध्यायप्रवचने चे"त्यादिना स्वाध्यायप्रवचने सर्वत्रानुगमयित्वा[1] "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यस्तद्धि तपस्तद्धि तप" इति च श्रुतिः ॥

"सम्यग्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च ।
न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च स" इति च कर्मतत्वे ॥

"सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।
कार्यं नान्यत् तस्य तेन तुष्टो भवति केशव" इति प्रवृत्ते ॥

"ज्ञात्वाऽपि विष्णुं तस्य स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् ।
मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते ॥

---

१—अनुगमय्येति वक्तव्य इत्थमेव बहुलोपलभ्यते । अनुगमपदादेवाऽचारार्थेकप्रत्यये साधुताऽपि शक्यसम्पादना ।

**सर्वपरिज्ञानं प्रथमत उच्यते—**

**॥ ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ १ ॥**

**अन्तो निर्णयः ।**
**उभयोरपि दृष्टोऽन्त इति वचनात् ॥**
**सर्ववेदनिर्णयोत्पाद्यज्ञानं ब्रह्म ।**
**आत्मेत्येवोपासीतेत्यादिविधीनां तदुक्तयुक्तीनां चाविशिष्टत्वात् ॥**

**॥ ॐ भेदान्नेति चेदेकस्यामपि ॐ ॥ २ ॥**

**विज्ञानमानन्दं ब्रह्म ।**
**सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेन्न ।**

---

व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोऽधिकं तु देवानां मुख्यैर्व्याख्याकृतो यत" इति पाद्मे ॥

सा चोपासना ज्ञानपूर्विकेति ब्रह्मणः परिज्ञानं प्रथमतोऽपेक्ष्यम् । तच्च सर्ववेदार्थपरिज्ञानात्मकम् । सर्ववेदार्थरूपत्वाद्ब्रह्मणः । अतः **सर्ववेदार्थपरिज्ञानं प्रथमत** आपादनीयमाचार्यसेवापूर्वकश्रवणमननाभ्याम् । तत्**प्रथमत उच्यते** ॥ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** । **सर्ववेदानिर्णयोत्पाद्यज्ञानं ब्रह्मेति** ॥ अयं भावः । सर्वान्वेदानधिगम्य तदर्थनिर्णयात्मकत्वेनोत्पाद्यं ब्रह्मज्ञानम् । निर्णयः शास्त्रश्रवणेनैव भवतीति तत्कार्यम् । "**तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरि**"ति हि श्रुतिमन्त्रैर्[2] दर्शयिष्यति । "**आत्मेत्येवोपासीत**" "आत्मानमेव लोकमुपासीत" "तमेवैकं जानथ" "विज्ञाय प्रज्ञां कुर्वीते"त्यादि-विधीनां, "अत्र ते सर्व एकं भवन्ति । स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते" "अमृतस्यैष सेतुः" "वाचो विग्लापनं हि तदि"त्यादिना तत्र तत्र विधिवाक्येषू**क्तयुक्तीनां च** सर्वशाखिनाम**विशिष्टत्वात्** ॥ "तमेवैकं जानथे"ति "पौर्णमासी निर्वपती"तिवत् । नह्येतदेतस्यैव शाखिन इति विशेषः प्रतीयते ॥छ॥

---

१ 'ख'—मुख्यं
२ — "दर्शयन्ति चे"ति सूत्रे

**एकस्यामपि शाखायां आत्मेत्येवोपासीतों खं ब्रह्मेत्यादिभेददर्शनात् ॥**

**॥ ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकारच्च ॐ ॥ ३ ॥**

**स्वाध्यायोऽध्येतव्य इति सामान्यविधेः ।**
**हिशब्दाद्वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेति स्मृतेः ॥**
**सर्ववेदोक्तिमार्गेण कर्म कुर्वीत नित्यशः ।**
**आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः ॥**
**सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।**
**शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपदिति समाचारे सर्वेषामधिकाराच्च ॥**

**॥ ॐ सलिलवच्च तन्नियमः ॐ ॥ ४ ॥**

---

**भेदान्नेति चेदेकस्यामपि** ॥ तत्तच्छाखासु पृथक्पृथक् ब्रह्मरूपस्योच्यमानत्वान्नैराकांक्ष्यात्तत्तच्छाखिनां तत्तदुदितपरिज्ञानेन पूर्यत इति चेन्न । एवं **चेदेकस्यामप्युक्तिभेददर्शनाद**धिकारिभेदप्रसङ्गात् ॥ ॥ छ ॥

**स्वाध्यायस्ये**त्यादि सूत्रम् ॥ इतश्च सर्ववेदनिर्णयेन ब्रह्मज्ञानमुत्पाद्यम् । यथा सर्ववेदनिर्णयप्राप्तिरधिकारिणां भवति । तथा हि स्वाध्यायध्ययनविधिः प्रवृत्तः । **"स्वाध्यायोऽध्येतव्य" इति** सामान्यतो ह्यध्ययनं विधत्ते नैतावान्भाग एतस्येति । अतः **कृत्स्नो वेदोधिगन्तव्य** इत्यर्थः । तथा स्मृतेश्च । **आनन्दो हि** वेदोदितानुष्ठान**फलम्** । अतः सर्ववेदोदितमार्गेणानुष्ठान आनन्दोद्रेक इति कर्तव्यं नित्यं तथा सर्वकर्म । कुतस्तर्हि शाखाभेदः कर्माणि च तदधिकारिणामित्यत आह— **"शाखाभेदो ह्यशक्तिज"** इति । तदेवोपपादयति **"सर्वकर्मकृतावि"**-त्यादिना । **समाचारे** सम्यक् सर्वकर्माचरणे **सर्वेषां** शाखिना**मधिकाराच्च** न मन्तव्यं नैकाधिकारविषयाः सर्वशाखा इति । नहि सर्ववेदाधिगतिमन्तरेण तदुक्तमार्गेण मानसस्य वाऽन्यस्य वा कर्मणोऽनुष्ठानं शक्यते । ज्ञानपूर्वकत्वादनुष्ठानस्य ॥ ॥ छ ॥

**यथा सर्वं सलिलं समुद्रं गच्छत्येवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः ।**
**आग्नेये च—**
**यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।**
**एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तय इति ॥**

**॥ ॐ दर्शयति च ॐ ॥ ५ ॥**

**सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् ।**
**तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरिति चतुर्वेदशिखायाम् ॥**
**सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ।**
**सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो नचान्यथेति च ब्रह्मतर्के ॥**

**॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥**

**सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वादित्यत आह—**

**॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ ६ ॥**

---

**सलिलवच्च तन्नियमः** ॥ **यथा सर्वं सलिलं** शक्ये समुद्रगमनपर्यवसायि । एवं सर्ववचनानि ब्रह्मज्ञापनपर्यवसायीनि । पुरुषशक्त्यभावादेव तदपरिज्ञानं न तेषां तस्यार्थस्याभावादिति भावः ॥ ॥ छ ॥

**दर्शयति च** ॥ तमेतमर्थं श्रुतिश्च मुख्त एव **दर्शयति** ॥ **च**शब्दात्स्मृतिश्च ॥ ॥ छ ॥

**इति सर्ववेदान्तप्रत्ययाधिकरणम्**

एवं तावत्सर्ववेदपरिज्ञानं मुख्यम् । तदशक्तौ यावच्छक्ति प्रयत्नलभ्यमित्युक्तं भवति । यद्यपि केषाञ्चिद्विततप्रज्ञानां सर्वपरिज्ञानं कथञ्चित्क्रमेण शक्यम् । तथाऽपि **न** सर्ववेदोदितगुणोपसंहारेणो**पास्यः** परः । अनन्तवेदपदोदितानन्तगुणानां युगपद्बुद्धावारोपणस्या**शक्यत्वादित्यत आह**—**उपसंहार** इत्यादिसूत्रम् ।

**सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः ॥**
**उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः ।**
**सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैरिति हि भाल्लवेयश्रुतिः ॥**
**आग्नेये च—**
**विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि ।**
**यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः ॥**
**एवं सर्वगुणान्सर्वदोषाभावांश्च यत्नतः ।**
**योजयित्वैव भगवानुपास्यो नान्यथा क्वचिदिति ॥**
**समानविषये चोपसंहारः ।**
**नतु सोऽरोदीदित्यादीनाम् ।**
**गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन ।**
**गुणैरपि नतूपास्यो ये पूर्णत्वविरोधिन इति हि बृहत्तन्त्रे ॥**

---

**गुणान्** ब्रह्मज्ञानादीन् **दोषाभावान**पहतपाप्मत्वादीन् । "**सर्वैर्गुणैस्तत्र तत्र प्रतीतैरि**"त्यनेन पूर्वोक्तं व्याचष्टे श्रुतिः । **एक** इति श्रुतिपदेनार्थाभेदादिति सूत्रावयवं व्याचष्टे । **एको** हि परमात्मा सर्ववेदैरुपास्योऽर्थः सर्वगुणात्मक इत्यर्थः । यजेतेत्यादिविधिविषयत्वेन **विधिशेषाणि कर्माणि** ज्योतिष्टोमादीनि । अथवा प्रधानविधिशेषभूतानि **कर्माणि विधिशेषाणि** प्रयाजादीनि सर्वैर्वेदैः सम्भूयोदितानि **सर्वैः** शाखिभिः **कार्याणि** । **समानविषये** चेत्यादेरयमर्थः । गुणानामेव **चोपसंहारः** कार्यो **नतु** "**सोऽरोदी**द्यदरोदीत्तद्रुद्रस्य रुद्रत्वं" "रुद्रस्य त्वेव धनुरार्त्निः शिर उत्पिपेषे"त्याद्यर्थानाम् । तत्र हि "तदधीनत्वादर्थवदि"त्युक्तन्यायसिद्धरोदनस्वातन्त्र्यादीनां गुणानामुपसंहारः । रोदनादीनां दोषाणामनुपसंहार एव । लोके सुखज्ञानादीनां गुणानां सप्रतियोगिकत्वदर्शनेन परमात्मन्यपि तद्व्याप्तिराशङ्कनीया स्यादिति तत्परिहाराय **समानविषये** चेत्युक्तम् । इयं चाशङ्का प्रथमत एव पर्यहारि **दोषवर्जितमि**ति । अत्र तूपास्तिप्रकरणे पुनर्विशोधनार्थं सूत्रितो दोषानुपसंहारो भाष्यते **समानविषये चे**ति ॥ गुणविपरीतलक्षणदोषानुपसंहार सिद्धावपि निर्दुःखत्वादयः पृथक्पृथगुपसंहर्तव्या इत्येतदर्थं **दोषाभावांश्चे**ति

**॥ ओं अन्यथात्वं शब्दादिति चेन्नाविशेषात् ओं ॥ ७ ॥**

आत्मेत्येवोपासीतेतिशब्दादुपसंहारस्यान्यथात्वमिति चेन्न ।
एते गुणा नोपास्या इति विशेषवचनाभावात् ॥
सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो नतु दोषैः कदाचिदिति विशेष-
वचनाच्च ।
आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥

**॥ ओं नवा प्रकरणभेदात्परोवरीयस्त्वादिवत् ओं ॥ ८ ॥**

प्रकरणभेदान्नवोपसंहारः कार्यः ।
परोवरीयस्त्वादिषु तावदेव ह्युक्तम् ॥

**॥ ओं संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ओं ॥ ९ ॥**

सर्वविद्या उक्त्वा सोऽहं नामविदेवास्मि नाऽत्मविदिति वचनात्सर्वस्य
ब्रह्मनामत्वात्तदुपसंहारः कार्यः ।

---

पृथग्भाष्यम् । यद्यपि दोषाभावेषु गुणव्यवहारोऽस्ति । तथाऽपि लोकवेदानुसारेण भेदोक्तिरूपदेशस्पष्टत्वाय तात्पर्यादिति । नच सुखं दुःखाभवः । सुखदुःखयोः सहोपलब्धेः सर्वसम्मतत्वात् । नच सति सुखे दुःखं नास्तीति नियमः । उक्तहेतो-रेव । तस्माद्गुणोक्त्यनन्तरं दोषाभावोक्तिर्न पुनरुक्तिः स्यात् । **पूर्णत्वविरोधिनो** मितभुक्त्वादयः ॥ ॥ छ ॥

**अन्यथात्वमित्यादिसूत्रम्** ॥ "**आत्मेत्येवोपासीते**"त्यवधारणादेतावदेवो-पासीत नाधिकमित्यवगमादु**पसंहारस्या**कर्तव्यत्वमि**तिचेन्न । एते गुणा नोपास्या इति विशेषवचनाभावात्** । अवधारणमेव तदिति चेन्न । अन्यार्थत्वात् । आत्मे-त्येवोपासीत भगवन्तं नत्वानात्मेत्ययोगव्यवच्छेदार्थत्वात् ॥ ॥ छ ॥

**नवे**त्यादि सूत्रम् ॥ "स एष परोवरियानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरियसो ह लोकाञ्जयति य एतमेवंविद्वान् परोवरियांसमुद्गीथमु-पास्त" इत्यादिषु प्रकरणेषु कियताञ्चिदेवोपास्तिः फलवती ह्युक्ता ॥ ॥ छ ॥

**नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः ।**
**कार्यैव ब्रह्मणि परे नात्र कार्या विचारणेति च ब्रह्मतर्क इति चेत्सत्यम् ।**
**उक्तो ह्युपसंहारः ।**
**तत्प्रमाणमप्यस्त्येव ।**
**नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्य इति कौण्डिन्यश्रुतौ ॥**

**॥ इत्युपसंहाराधिकरणम् ॥ २ ॥**

## ॥ ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ १० ॥

**युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।**
**गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।**
**अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेवत्विति भविष्यत्पर्वणि ॥**

**॥ इति प्राप्त्यधिकरणम् ॥ ३ ॥**

---

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि** ॥ "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमि"त्यादि **सर्वविद्या उक्त्वा "सोऽहं नामविदेवास्मि नाऽत्मविदि"**ति सनत्कुमारं प्रति नारदस्य तत्वजिज्ञासोर्**वचनात् सर्वस्य** शब्दराशे**र्ब्रह्मनामत्वा**त्तदुदितसर्वगुणानुपसंहारे तन्नाम्नि ब्रह्मणोऽनुपास्तिप्रसङ्गा[1]**दुपसंहारः कार्य इतिचेत्सत्यं** ॥ कर्तव्य एवो**पसंहार** इत्युक्तम् ॥ यावच्छक्ति प्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणग्रहणार्थं च पुनः पुनरुपसंहारोपन्यासः । वेदयन्तीति **विद्या** वेदादयः ॥ छ ॥

**इत्युपसंहाराधिकरणम्**

उपसंहारः कर्तव्य इत्युक्तम् । नवा सर्वगुणोपसंहार इतिचोक्तम् । तत्कथमित्यत आह—**प्राप्तेश्च समञ्जसम्** ॥ ब्रह्मणः सर्वगुणोपसंहारयोग्यता । ततः क्रमेण न्यूनोपसंहारो देवपित्रादिषु । मानुषेष्वल्पोपसंहारयोग्यता ॥ ॥ छ ॥

**इति प्राप्त्याधिकरणम्**

---

१ 'क' 'ख' 'ग'—ऽनुपास्तित्वादुप-

**॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ ११ ॥**

**सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति ॥**
**सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत् ।**
**इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति हीति पाद्मे ॥**

**॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥**

**सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमित्याह—**

**॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥ १२ ॥**

---

**सर्वाभेदादन्यत्रेमे** ॥ ये सर्वगुणोपास्तिं कुर्वन्ति ते सर्वगुणाभेदेनोपासनेन तेना**न्यत्र** विलक्षणे सम्पूर्णानन्दाद्यात्मके मोक्ष**फले भवन्ति । इम** इति विशेषतः प्रस्तुतत्वात्सर्वोपसंहारका उच्यन्ते । यद्यपि ब्रह्मैव सर्वगुणोपासकः । तथाऽपि तदनतिन्यूनब्रह्माण्यादिविषय **आदि**शब्दः । **इतरे तु** यथाशक्त्युपास्तिं कुर्वाणा **यथायोगं** फलभाजो भवन्ति । "**सम्यङ्मुक्तावि**"ति वचनादत्यल्पगुणोपासकानां मुक्तिरपि सम्यङ्मुक्तिरेव । नासम्यङ्मुक्तिरिति सिध्यति । दुःखलेशाभावात् ॥ ॥ छ ॥

**इति सर्वाभेदाधिकरणम्**

ये सम्यङ्मुक्तिमात्रमिच्छन्ति न तत्र विशेषांस्तेषां ये गुणा उपास्यास्ते कियन्त इत्यधुना निरूप्यते । ननु किमत्र गुणोपास्तिप्रयोजनं, यदि स्वात्मनि गुणसमभिव्यक्तिस्तर्ह्यनर्थहेतुर्गुणोपासना स्यात् । बुद्धिसुखादीनां गुणानामत्यन्तोच्छित्तेरेवानर्थहानित्वेन मोक्षत्वात् । सुखज्ञाने हि दुःखज्ञानं दुर्वारम् । सुखदुःखयोरितरेतरव्याप्तत्वात् । अदृष्टनिमित्तानां च बुद्ध्यादीनां विशिष्टज्ञानयोगेन तदुच्छेद उच्छित्तिरेवाऽश्रयणीया । नच सुखानुभवाभावे मोक्षे प्रवृत्त्यभावप्रसङ्गः । दुःखनिवृत्त्यर्थं तदुपपत्तेरिति । न तावत्सुखज्ञानादीनां गुणानामभावो मोक्षे मन्तव्यः । प्रमाणाभावात् । यच्चोत्प्रेक्ष्यते मोक्षः सुखहीनो दुःखहीनत्वा-

**प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्या एव ॥**
**सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।**
**सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षितेति ब्रह्मतर्के ॥**

**॥ इत्यानन्दाद्यधिकरणम् ॥ ५ ॥**

---

द्वैधर्म्येण संसारवदिति । तदीश्वरेऽनैकान्तिकम्[1] । "आनन्दं ब्रह्मणो विद्वान्न बिभेति" "आनन्दो ब्रह्मेति व्यजानात्" "विज्ञानमानन्दं ब्रह्मे"त्यादिश्रुतेः पूर्णानन्दत्वादीश्वरस्य, "निरनिष्टो निरवद्यः" अपहतपाप्मा विजरो विमृत्युर्विशोकः" "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती"त्यादेर्निर्दुःखत्वाच्च, सुखदुःखयोरितरेतरव्याप्तिरिति वाङ्मात्रम्। "ब्रह्मेति यद्विदुरजस्रसुखं विशोकमि"ति च भागवते। आगमविरुद्धं चैतत् । "यत्र कामानि कामाश्च" "यत्राऽनन्दाश्च मोदाश्च" "सर्वे नन्दन्ति" "स दुःखाद्विमुक्त आनन्दी भवति" "तरति शोकमात्मविदि"त्यादिश्रुतिभ्यो मोक्षे निर्दुःखसुखाधिगमात् । अप्रवृत्तिप्रसक्तिश्चान्यथा । पुरुषार्थाभावात् । दुःखनिवृत्तिः पुरुषार्थ इति चेत्सत्यमनुभूयमाना । अन्यथा शिलादिवन्नैव स्यात् । नह्यचेतनत्वप्राप्तिः पुरुषार्थ इति मतिमन्तो मन्येरन्। "मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदि"ति च भारते । इच्छन्ति सुप्त्यादिकं दुःखं सोढुमक्षमा इति चेन्न । सुखार्थत्वात्तदिच्छायाः । सुखमहमस्वाप्समिति हि तत्रत्यः सुखानुभवोऽनुस्मर्यते । दुःखनिवृत्तौ तत्र सुखव्यवहारो भारार्तानामिव तन्निवृत्ताविति चेत् । दुःखनिवृत्त्यनुभवमेव तर्हि तत्रापि पुरुषार्थं मन्यसे । नच दुःखाभाव एव सुखमिति वक्तुं शक्यते । प्रतियोग्यनिरूप्यत्वात् । सुखाभाव एव दुःखमित्युक्ते किञ्चोत्तरमनुभवापलापिनः । तस्मात्सुखानुभवाभावे प्रवृत्त्यभावप्रसङ्गाच्छ्रुतिबलाच्च मोक्षे सुखानुभवोऽभ्युपगन्तव्यः । तथाऽपि भगवानुपासित एव दुःखं निवर्तयति सुखं चोपभोजयति । किमनेन गुणविशेषान्वेषणेन । अथवा सुषुप्तिप्रलयवदनुपास्यैव च स स्यादित्यत आह—**आनन्दादयः प्रधानस्य** ॥ निर्दोषसुखानुभवरूपाय मोक्षप्रयोजनाय आनन्दादयश्चत्वारो गुणा **उपास्या एव** । सत्त्वं नाम निर्दोषत्वं ।

---

1 'क' 'ग'—ऽनैकान्तम् ।

## ॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ १३ ॥

**फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिः ॥**

**नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः ।**
**विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णतेति हि वाराहे ॥**

**॥ इति प्रियशिरस्त्वाद्यधिकरणम् ॥ ६ ॥**

## ॥ ॐ इतरे त्वर्थसामान्यात् ॐ ॥ १४ ॥

---

नहि सुखानुभवमात्रं मोक्ष इष्यते । संसारेऽपि तत्सम्भवात् । नच निर्दोषसुखानुभवस्तथा तदुपास्तिं विना प्राप्यते । "तं यथा यथोपासते तदेव भवती"ति श्रुतेः । "स यथाकामो भवती"त्यादेश्च । सच पुरुषार्थः परतन्त्रस्य जीवस्य स्वामिनः सकाशाल्लभ्यत इति स्वामित्वं भगवत उपसंहर्तव्यं विशेषतः । तच्चाऽह । **आत्मेति** । आदत्त इति ह्यात्मा । एतदेव च विशेषत उपसंहारयिष्यति महत्यामप्यापदि — **आत्मेतितूपगच्छन्ती**त्यादौ । "आत्मशब्दाच्चे"ति चोक्तमात्रोपसंहारप्रमाणं वदिष्यति "**आत्मेत्येवोपासीते**"ति श्रुतिम् । अत एतच्चतुष्कमुपासनीयम् । पलसाम्यात् । फलस्योपास्तिसदृशत्वात् । "प्रतिमुखस्य यथा मुखश्रीः" इति हि भागवते । अनेवम्भूतस्य चाफलत्वादुक्तन्यायेन । नच सुप्त्यादिवन्मोक्षसुखानुभवः । तस्यास्पष्टत्वात् । सांसारिकादनन्तगुणत्वान्मौक्तिकस्य । सभक्ति भगवद्दृष्टिरूपत्वाच्च ॥छ॥

**इत्यानन्दाद्यधिकरणम्**

**भूम्नः क्रतुवज्ज्यायस्त्व**मिति वक्ष्यमाणन्यायेन पूर्णानन्दः पूर्णज्ञान इत्याद्युपासनं प्राप्यते । तस्य च पूर्णानन्दस्याऽऽनन्दमयशब्दोदितस्य विशेषा उच्यन्ते "तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठे"ति । तेऽप्युपसंहर्तव्याः । चतुर्णां गुणानां साकल्ये-

**इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ॥**

**॥ इति फलसाम्याधिकरणम् ॥ ७ ॥**

**उपसंहारानुपसंहारप्रमाणमाह—**

**॥ ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ १५ ॥**

**आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ॥**
**ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणात् ।**
**ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ॥**
**नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।**
**श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यत इति परमसंहितायाम् ॥**

---

नोपासनीयत्वादित्यत आह—**प्रियशिरस्त्वादी**त्यादिसूत्रम् ॥ एकैकस्मिन्नपि गुणे विशेषाणामुपचयापचयौ फलतारतम्यार्थं भवतः । अपचयः फलमात्राय भवति । न फलाभावाय । उक्तगुणोपास्तावुपचयोऽधिकफलाय भवति । अतो नापरेषां प्रियशिरस्त्वादिगुणविशेषोपास्तिः प्राप्यते । श्रवणोत्थं 'प्रियं' दर्शनोत्थो 'मोदः' भोगोत्थः 'प्रमोदः' स्वरूपभूत 'आनन्दः' । तत्तत्प्रवर्तकतया च तत्तद्व्यपदेशः ॥

"शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् ।
मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् ॥
मोदप्रमोदनामानावानन्दश्चाऽततत्वतः ।
मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्यादि बृंहयत् ।
पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा ॥
अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः ।
देहदेहिवदेवासौ पञ्चधाऽत्रस्थितो हरिरि"ति यजुस्संहितायाम् ॥

॥ छ ॥

**इति प्रियशिरस्त्वाद्यधिकरणम्**

**गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।**
**नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥**
**ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् ।**
**मुख्यं भवेन्नचान्येन फलं मुख्यं क्वचिद्भवेदिति बृहत्तन्त्रे ॥**

**॥ ॐ आत्मशब्दाच्च ॐ ॥ १६ ॥**

**आत्मेत्येवोपासीतेत्यनुपसंहारप्रमाणम् ॥**

**॥ इत्याध्यानाधिकरणम् ॥ ८ ॥**

**॥ ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ १७ ॥**

**नचाऽनन्दादयः प्रधानस्येत्युक्तिविरोधः ।**
**यतः सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दमितिवदेवाऽत्मशब्दगृहीतिः ।**

---

सर्वगुणोपसंहारोऽल्पोपसंहारश्च प्रमाणतः साधितौ, विषयविवेकेन चाविरोधं नीतौ । तयोस्तात्पर्यात्पुनः **प्रमाणमाह—आध्यानाय प्रयोजनाभावात्** ॥ आप्त्वा धिया **ध्यानार्थं हि सर्वे गुणा उच्यन्ते** ॥ ॥ छ ॥

**आत्मशब्दाच्च** ॥ "**आत्मेत्येवोपासीते**"त्येतद्वाक्यं चतुर्गुणोपासनेऽप्यशक्तानत्यन्तावरान्मुमुक्षूनुपक्रम्योत्तरोत्तराधिकारिणो ब्रह्मपर्यन्तान्प्रति स्वस्वयोग्यगुणोपास्तिविधिपर्यवसायकमुपदिदिक्षदल्पोपसंहारप्रमाणं समभिधत्त **आत्मशब्दाच्चे**ति सूत्रमनुसरन् ॥ ॥ छ ॥

**इत्याध्यानाधिकरणम्**

कथमात्मेत्येवेत्यादिवाक्यमुक्तोपसंहारे प्रमाणं स्यात् । यावतैक एव गुणस्तस्मिन्प्रतीयत इत्यत आह—**आत्मगृहीतिरितरवदुत्तरात्** ॥ यथेतरेषु "**विज्ञानमानन्दं** ब्रह्मे"त्यादिषु वचनेषु नैकगुणगृहीतिस्तद्वदितरयुक्तत्वेनैवाऽऽत्म**शब्दगृहीतिः** । आनन्दादयो गुणा विवक्षिता एवाऽत्मशब्देनेत्यर्थः । "**अत्र ह्येते**

**अत्र ह्येते सर्वं एकं भवन्तीत्युत्तरात् ॥**
**आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।**
**नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वर इति हि बृहत्तन्त्रे ॥**

**॥ इत्यात्मगृहीत्यधिकरणम् ॥ ९ ॥**

## ॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥ १८ ॥

**सर्वगुणानामन्वय आत्मशब्दे भवति ।**
**आप्तव्याप्तेरात्मशब्दः परमस्य प्रयुज्यत इति वचनादिति चेत्सत्यम् ।**
**स्याच्चैवम् ।**
**आत्मेत्येवेत्यवधारणात् ।**
**अन्यथा सर्वोपसंहारवचनविरोधात् ॥**

**॥ इत्यन्वयाधिकरणम् ॥ १० ॥**

---

**सर्वं एकं भवन्ती**''त्युत्तराद्वाक्यात् । ''प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यं-श्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मन'' इत्युक्ता गुणा **एवे**ति परामृश्यन्ते । **अत्र ह्या**त्मत्वगुण **एते सर्वे** गुणा **एकं भवन्ति** ॥ **एकमि**ति भेदाभावात् । **भवन्ती**ति विशेषात् । 'प्राण' इत्यानन्दत्वं स्वामित्वं च ॥

''प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते ।
प्राणिप्रणयनादेष'' इत्यादेः । प्रकृष्ट इति निर्दोषत्वं च लक्ष्यते ॥ ॥ छ ॥

### इत्यात्मगृहीत्यधिकरणम्

**अन्वयादिति चेत्स्यादवधारणात्** ॥ तर्हि तावन्त एवेति नियन्तुं न शक्यते । **सर्वगुणानाम**प्यात्म**शब्दे** वाच्यत्वेनान्वयात् । अतः कथमनुपसंहार-प्रमाणत्वमिति **चेत्सत्यम्** । न तत्रैव प्रमाणं । सर्वोपसंहारेऽपि प्रमाणमेव ।

**॥ ॐ कार्याख्यानादपूर्वम् ॐ ॥ १९ ॥**

**अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्येति-कार्याख्यानादन्यत्रादृष्टा एव गुणा उपास्याः ॥**

**॥ इति कार्याख्यानाधिकरणम् ॥ ११ ॥**

**॥ ॐ समान एवञ्चाभेदात् ॐ ॥ २० ॥**

**अपूर्वत्वेऽपि समानानामेवोपसंहारः ।**
**नतु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन ।**
**नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥**

---

आत्मेत्येवेति सर्वगुणपूर्ण इत्येवेत्यवधारणात् । एवमर्थानङ्गीकारे **सर्वोपसंहार-वचनविरोधात्** ॥　　॥ छ ॥

**इत्यन्वयाधिकरणम्**

**कार्याख्यानादपूर्वम्** ॥ मुक्तिकार्यस्यालौकिकत्वात् । तत्सम्पादकगुणा अप्यलौकिकत्वेनैवोपास्याः । अलौकिकत्वोपास्तिपरमेतदतो **न परमत** इत्यनेन पुनरुक्तिराशङ्कनीया ॥　　॥ छ ॥

**इति कार्याख्यानाधिकरणम्**

सर्वानुपसंहारप्रमाणं सर्वोपसंहारार्थं चोक्तम् । योजनाभेदेन बह्वर्थत्वाद्वेद-वाक्यानां ब्रह्मादिषूत्तमाधिकारिषु तात्पर्याधिक्याच्च गुणानामुपास्तावित्थम्भा-वश्चोक्तः । इदनीमवान्तरोपसंहारप्रकारं दर्शयति ॥ **समान एवञ्चाभेदात्** ॥ अलौकिकत्वविषयस्य सर्वत्रानुचिन्तनीयत्वज्ञापनार्थ**मपूर्वत्वेऽपी**त्युपरि चानु-वर्णयति । **समानानामेवोपसंहारो नतु** क्रियासु विशेषोपसंहारः । नित्यक्रियास्वेव विशेषाणां **कादाचित्कानाम**न्तर्भाव्योपास्तिसम्भवात् । अधिकारिविशेषश्चात्र विवेचनीयः ॥

## ॥ ॐ सम्बन्धादेवमन्यत्रापि ॐ ॥ २१ ॥

**परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ॥**
**गुणास्त्रैविक्रमाद्यश्च संहर्तव्या न संशयः ।**
**विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिक इति हि बृहत्तन्त्रे ॥**

**॥ इति समानाधिकरणम् ॥ १२ ॥**

## ॥ ॐ नवा विशेषात् ॐ ॥ २२ ॥

**नवाऽऽत्मशब्देन सर्वगुणगृहीतिः ।**
**अधिकारिविशेषात् ॥**

## ॥ ॐ दर्शयति च ॐ ॥ २३ ॥

**सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां नचैवेति च भाल्लवेयश्रुतिः ॥**

**॥ इति विशेषाधिकरणम् ॥ १३ ॥**

---

"ब्रह्मा सर्वैर्गुणैश्चैव क्रियासामान्यतश्च गीः ।
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः पर" इति ह्यनुव्याख्याने ॥ ॥ छ ॥

**सम्बन्धादेवमन्यत्रापि** ॥ कादाचित्कव्यक्तीनामपि शक्त्यात्मना **नित्यत्वान्नित्यव्यक्तवदेवोपसंहार्यत्वं युज्यते** ॥ ॥ छ ॥

**इति समानाधिकरणम्**

**नवा विशेषात्** ॥ अधिकारिविशेषात्सर्वोपसंहारश्चानुपसंहारश्चोक्तः । इदानीमात्मशब्दोऽप्यधिकारिविशेषापेक्षया गुणविशेषसमर्पक इत्याह—**नवाऽऽत्मशब्देन सर्वगुणगृहीतिः** सर्वान्प्रति । **अधिकारिविशेषात्** ॥ ॥ छ ॥

**॥ ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ २४ ॥**

**सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये नान्येषाम् ।**
**अत एव योग्यताविशेषात् ॥**
**देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः ।**
**आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेदिति च ब्रह्मतर्के ॥**

**॥ इति सम्भृत्याद्यधिकरणम् ॥ १४ ॥**

**यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानामितराऽन्येषामिति चेन्न–**

**॥ ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ २५ ॥**

**पुरुषसूक्तोक्तविद्यायामपि केषाञ्चिद्गुणानामनाम्नानात् ॥**
**सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ।**
**तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृरिति ब्रह्मतर्के ॥**

**॥ इति पुरुषविद्याधिकरणम् ॥ १५ ॥**

---

**सर्वान्गुणानात्मशब्दो ब्रवीति** ब्रह्मणः । ब्रह्माण्यादीनां शतं शतमूनान् । क्रमादतिन्यूनत्वाद्योग्यताया अवरेषामल्पगुणानेव ॥ ॥ छ ॥

**॥ इति विशेषाधिकरणम्**

**सम्भृतिद्युव्याप्त्यपि चातः** ॥ सम्भृतिद्युव्याप्त्यादयो गुणा **अपि देवादीनामुत्त**रेषामुपसंहर्तव्या नाऽनन्दादय एव । अपिशब्दाद्वीर्यैश्वर्यादयोऽपि ग्राह्याः । द्वित्वमात्रव्यावृत्त्यर्थं किलाप्रगृह्यासूत्रयत् । **भृतिव्याप्त्यादयो गुणा** इति हि प्रमाणवचनम् ॥ ॥ छ ॥

**इति सम्भृत्याद्यधिकरणम्**

## ॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ २६ ॥

**भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः ।**
**यत्यादीनां तेष्वयोगान्नाधिकार्यैकता भवेत् ।**
**अयोग्योपासनादीयुरनर्थं चार्थनाशनमिति बृहत्तन्त्रे ॥**

**॥ इति वेधाद्यधिकरणम् ॥ १६ ॥**

**मुक्तस्योपासना कर्तव्या नवेत्यतो ब्रवीति—**

## ॥ ॐ हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ २७ ॥

---

यस्मिन्वेदप्रकरणे **महासंख्या गुणा उच्यन्ते**, बहुगुणा इत्यर्थः, तदुत्तमाधिकारिणामित्यत आह—**पुरुषविद्यायामपि चेतरेषामनाम्नानात्** । पुरुषसूक्तमित्युक्ता विद्या पूरुषसूक्तोक्तविद्या ॥ ॥ छ ॥

**इति पुरुषविद्याधिकरणम्**

इतश्च नाधिकारिणामेकरूपता ॥ **वेधाद्यर्थभेदात्** ॥ "ताभिर्विध्य हृदये यातुधानान्" "अग्ने त्वचं यातुधानस्य भिन्धि" "प्रपर्वाणि जातवेदः शृणीही" त्याद्युपासनस्य दुष्टनाशनत्वेन फलवैलक्षण्यात् । यत्यादीनां तन्निग्रहायोग्यत्वाच्च ॥ ॥ छ ॥

**इति वेधाद्यधिकरणम्**

**मुक्तस्योपासना कर्तव्या नवे**ति निरूप्यते । न कर्तव्येति प्राप्तम् । विध्यभावात् । प्रयोजनाभावाच्च । मोक्षार्थं ह्युपासना । तत्पर्यन्तं[1] च विधेयत्वम् । अतः कुतो मुक्तस्योपासनाप्राप्तिः । कर्तव्यैवेत्यपरः पक्षः । मुक्तस्यापि परतन्त्रत्वात् । तदा तदा विशेषभोगापेक्षयोपास्तिसम्भवादिति । अत आह—**हानौ** **त्वि**त्यादि सूत्रम् । आसंसारहानेर्विहितत्वात्प्रयोजनाय क्रियते । तद्धानौ मोक्षे

---

1 'ख'— तावत्पर्यन्तं

